# अनुक्रमणिका

## प्रथमः सर्ग-काण्डः

### प्रथमः परिच्छेदः

बीज-स्वरूप, शब्द-प्रादुर्भाव, रूपाकर-कथनम् ·१६

१ मङ्गलाचरणं १
२ ग्रन्थकार-परिचयः १
३ ग्रन्थ-प्रशंसा ५
४ ग्रन्थस्य अनुक्रमणिका ६
५ ग्रन्थस्य काण्ड-परिच्छेदादि-निरूपणम् ६
६ तन्त्र-शास्त्र-प्रशंसा १०
७ गृहे तन्त्र-शास्त्र-स्थिति-फलम् „
८ तन्त्रोक्त कर्मणो हानि-निषेधः „
९ ज्योतिस्तन्त्रादौ अपशब्द-निषेधः „
१० तन्त्र-शास्त्रे संशय-निषेधः „
११ तन्त्र-शास्त्रे विश्वास-फलं ११
१२ तन्त्र-ज्ञान-फलं „
१३ तन्त्र-शास्त्राधिकारि-कथनम् „
१४ कलौ तन्त्रोक्त-कर्मणा फलावाप्तिः „
१५ तन्त्र-वक्तृ-प्रशंसा १२
१६ तन्त्रादि-निन्दा-करणे दोषः „
१७ तन्त्र-श्रवण-फलम् „
१८ शक्त्युत्पत्ति-कथनम् १३
१९ सृष्टि-प्रकरणम् „
२० तत्र त्रि-विध बिन्दु-कथनम् १४
२१ त्रि-विध शक्ति-कथनं च „
२२ तत्र ब्रह्म-विष्णु-शिवाद्युत्पत्तिः १५
२३ शक्त्या सृष्ट्यादि-कथनम् „

२४ शब्द-ब्रह्मोत्पत्ति-कथनम् १६
२५ तत्र ब्रह्मणो द्वैविध्य-कथनम् ,,

द्वितीयः परिच्छेदः

शब्दार्थ-स्वरूप-ब्रह्म-कथनं, गर्भाक्षर-जात-जगत्-कथनं १७-३४

१ शब्दादीनां स्फोट-वादः १७
२ षट्-त्रिंशत्-तत्त्व-निरूपणम् २१
३ विष्णु-शिव-शक्तीनां पञ्चाशन्मूर्तयः २२
४ कालोत्पत्ति-कथनम् ,,
५ पञ्चाशत् विष्णुत्पत्तिः २४
६ पञ्चाशत् विष्णु-शक्त्युत्पत्तिः ,,
७ पञ्चाशत् रुद्रोत्पत्तिः २५
८ पञ्चाशत् रुद्र-शक्त्युत्पत्तिः ,,
९ औषधि-प्रयोजनम् ,,
१० परम-ब्रह्म-निरूपणम् २७
११ वर्णतो नाना-शास्त्रोत्पत्तिः ३०
१२ वर्णतो राशि-सृष्टि-कथनम् ३१
१३ राश्यधिप-कथनम् ३२
१४ त्रिभुवन-राशि-चक्र-कथनम् ,,
१५ वर्णतो नक्षत्र-सृष्टि-कथनम् ,,
१६ अमावास्योत्पत्ति-कथनं ३३
१७ नक्षत्र-वारादौ जप-कथनम् ,,
१८ जन्म-नक्षत्रे वृक्ष-छेदन-निषेधः ,,
१९ नक्षत्र-देवता-कथनम् ,,
२० नक्षत्र-योनि-कथनम् ,,
२१ नक्षत्र-योनिः फलम् ,,
२२ पक्षोत्पत्ति-तिथ्यधिप-कथनम् ३४

तृतीयः परिच्छेदः

चतुर्विध-देह-सृष्टि-कथनम् ३५-४४

१ अथ सृष्टि-कथनम् ३५
२ लवादि-मान-कथनम् ,,
३ मुहूर्त-दिन-रात्रि-मास-वत्सर-मानम् ३६

४ तत्र ब्रह्म-दिनादि-निरूपणम् ३६
५ तत्व-सृष्टि-कथनम् ,,
६ पञ्च-भूतोत्पत्ति-लय-प्रकरणम् ३७
७ पञ्च-भूत-गुण-कथनम् ,,
८ भूत-मण्डल-कथनम् ३८
९ भूत-स्वरूप-कथनम् ,,
१० भूत-पञ्चात्मक-चतुर्विध-देह-सृष्टिः ,,
११ तत्र पञ्चीकरण-कथनम् ३९
१२ उद्भिदाद्युत्पत्ति-कथनम् ४०
१३ पाप-विशेषाद् वृक्ष-योनि-प्राप्तिः ,,
१४ पाप-भेदाज्जलत्वादि-प्राप्ति-कथनम् ४१
१५ तत्तत्-पाप-प्रायश्चित्तम् ४२
१६ कृमि-कीट-पतङ्गादीनामुत्पत्तिः ,,
१७ अण्डजाद्युत्पत्तिः ,,
१८ जरायुज-मनुष्याद्युत्पत्ति-कथनम्, मनुष्यत्व-प्राप्ति-प्रशंसा ,,

चतुर्थः परिच्छेदः

अन्न-मय-कोषात्मक-मनुष्य-देह-कथनम् ४८–५८
१ देह-सृष्ट्या गर्भोत्पत्ति-प्रकारः ४५
२ शुक्र-शोणितादुत्पत्ति-प्रकारः ४७
३ देह-सृष्टौ धातु-कथनम् ४९
४ इन्द्रियेन्द्रियार्थ-कथनम् ५१
५ इन्द्रियाणां गुण-कथनम् ,,
६ पञ्च-भूतोद्भवास्थ्यादि-कथनम् ५२
७ जन्तुलक्षणम् ५३
८ नाड्युत्पत्ति-कथनम् ,,
९ अस्थ्याद्युत्पत्ति-कथनम् ५७
१० नाड़ी-मुख-स्थान-कथनम् ,,

पञ्चमः परिच्छेदः

मनुष्य-जन्म-कथनम् ५८–६७
१ वायु-प्रकरणं तत्र शरीरस्थ-वायु-कथनं च ५८
२ दशाग्नि-कथनम् ६०
३ शरीर-कोष-विवरणम् ,,
४ गर्भस्थ जन्तोरवस्था-विशेषादिः ६१

५ इन्द्रियेषु पञ्च-भूत-स्थिति-प्रकारः ६२
६ देहे चतुर्दश-भुवन-स्थानादिः ६४
७ शरीरे तीर्थादि-कथनम् ६५
८ गर्भतो जीव-निःसरण-प्रकारः ६६
९ कुण्डलीतो वर्णोत्पत्ति-प्रकारः ६७
१० जन्तोरेकादशावस्था-कथनम् ६७
११ स्व-कर्मानुसारेण स्वर्गादिकम् ,,

षष्ठः परिच्छेदः

वर्णोत्पत्ति-क्रम-कथनम् ६८—७९
१ प्रस्तुत वर्णोत्पत्ति-प्रकारः ६८
२ कुण्डलिनी-स्वरूप-कथनम् ,,
३ तत्राक्षरोत्पत्ति-क्रमः ७३
४ पञ्चाशत्-काम-नामानि ,,
५ काम-शक्ति-नामानि ७४
६ पञ्चाशत् गणेश-नामानि ,,
७ पञ्चाशत् गणेश-शक्तयः ,,
८ एकोन-पञ्चाशत् क्षेत्रपालाः ७५
९ क्षेत्रपाल-कथनं प्रयोजनं च ,,
१० वैखरी-सृष्टि-कथनम् ,,
११ वर्णोच्चारण-स्थानादिकम् ७६
१२ वर्णोच्चार-प्रकारः ७८
१३ वर्णानां शिव-शक्त्यात्मकत्वं ह्रस्व-दीर्घत्वादि-कथनं च ,,
१४ वर्णानां पञ्च-भूतात्मकता मातृका-संज्ञादिश्च ७९

सप्तमः परिच्छेदः

अक्षर-लेखनादि-प्रकार-कथनम् ८०—९०
१ अक्षराणां मूर्ति-कल्पना लेखन-प्रकारश्च ८०
२ भूमौ वर्ण-मन्त्र-पुस्तकादि-लिखन-निषेधः ८८
३ लेखनी-करण-शुभाशुभम् ८९
४ पुस्तक-मान-कथनम् ,,
५ पुस्तक-वेध-फलम् ,,
६ पुस्तक-पत्र-फलम् ,,
७ पुस्तके वेद-लिखन-निषेधः ९०

८ लेखक-पूजा-फलम् ९०

९ लिखितस्य वेतन-ग्रहणे दोषः ”


अष्टमः परिच्छेदः


वर्णाभिधान-कथनम् ९१–९९


नवमः परिच्छेदः


आम्नाय-भेद-रूप-केशर-कथनम् १००–१०८

१ मन्त्र-प्रकरणम् १००

२ पृथिव्यां तन्त्रावतरणम् ”

३ तत्र महा-विद्यादीनां मातृका-वर्ण-भेदेभ्यः सर्व-वर्णोत्पत्ति-कथनम् १०१

४ तत्र पञ्चाम्नायादि-भेद-कथनं, तत्त्व-कथनं,
भट्टारक-शब्द-व्युत्पत्त्यादि-कथनं च ”

५ अष्टादश विद्या चतुर्वेदोपवेदाङ्गाद्युत्पत्ति-कथनम् ”

६ तत्र शैव-पाशुपतादि-शास्त्रोत्पत्ति-कथनम् १०२

७ आन्वीक्षिकि-शास्त्राध्ययने शृगाल-योनित्व-प्राप्तिः १०३

८ पञ्चाम्नायादि तन्त्र-प्रभेदाः १०४

९ षडाम्नायादि-भेदाः १०५

१० आम्नाय-भेदेनाचार-भेदः १०६

११ तन्त्राणां वेदाङ्गत्वादि-कथनम् ”

१२ अन्येषां सामान्य-शास्त्रत्वादिकम् ”

१३ तत्र भागवत-लक्षणम् १०७

१४ मातृका-वर्ण-भेदेभ्यः सर्व-मन्त्रोत्पत्तिर्द्विविध-मन्त्र-जाति-कथनं च ”

१५ प्रयोग-विशेष-सिद्ध्यर्थं मन्त्राणां त्रैविध्य-कथनं पुं-नपुंसकादि-भेदाश्च ”

१६ कर्म-भेदे स्त्री-नपुंसक-मन्त्र-प्राशस्त्यादि-कथनम् १०८

१७ सुप्त-प्रबुद्ध-मन्त्राणां प्रयोग-निषेधः ”

१८ सुप्त-प्रबुद्ध-मन्त्राणां लक्षणम् ”


दशमः परिच्छेदः


फल-कथनम् १०९

१ मन्त्राणां छिन्नादि-दुष्टावस्था ”

२ छिन्नादि-मन्त्राणां लक्षणानि ११५

३ मन्त्र-शोधनस्यावश्यकत्वम् ”

४ मन्त्र-शोधन-प्रकारस्तत्र महा-मुद्रा-कथनम् च

५ योनि-मुद्रा-कथनम् ११५
६ योनि मुद्रा करणाशक्तौ भूत-लिप्याविन्ना मन्त्र-दोष-शान्तिः ११६
७ अस्या ऋष्यादि-न्यासः, षडङ्ग-न्यासादिकं, ध्यानं च १२०
८ अस्या ध्यानान्तरम् „
९ भूत-लिपेः प्राण-प्रतिष्ठा १२१
१० भूत-लिपि-न्यास-क्रमः „
११ अस्याः पूजा-क्रमः १२२
१२ अस्याः प्रयोग-फलं च १२३
१३ मन्त्राणां दोष-शान्त्यर्थं दश-संस्काराः „
१४ बीजाभिधानम् १२४

## द्वितीयः धर्म-काण्डः

प्रथमः परिच्छेदः

संस्कार-रूप ग्रन्थि-कथनम् १२९–१५२
१ गर्भाधानादि-संस्काराः १३१
२ तत्रादौ ऋतु-संस्कारः „
३ गर्भाधान-कथनम् १३३
४ पुंसवन-विधिः „
५ पञ्चामृत-विधिः १३४
६ सीमन्तोन्नयन-विधिः „
७ जात-कर्म-विधिः „
८ निष्क्रमण-प्रयोगः १३६
९ अन्न-प्राशन-विधिः १३७
१० चूडाकरणम् „
११ अथोपनयनम् १३८
१२ तत्र यज्ञ-सूत्र-परिमाणम् „
१३ यज्ञ-सूत्र-प्रमाणाज्ञाने दोषः १३९
१४ यज्ञ-सूत्रस्य कर्तनम् „
१५ अस्य ग्रन्थि-प्रकारः „
१६ अस्य जीव-न्यासः १४०
१७ यज्ञोपवीतादि-धारण-विधिः „
१८ दार-परिग्रहस्यावश्यकता १४१
१९ धर्म-पत्नी-काम-पत्नी-निर्णयः „

२० दश-विध-संस्कार-प्रयोगः १४३
२१ तत्रादौ गर्भाधान-प्रयोगः १४४
२२ पुंसवन-प्रयोगः १४५
२३ पञ्चामृत-प्रयोगः १४६
२४ सीमन्तोन्नयन-प्रयोगः ,,
२५ जात-कर्म-प्रयोगः ,,
२६ नामकरण-प्रयोग १४७
२७ निष्क्रमण-प्रयोगः १४८
२८ अन्नप्राशन-प्रयोगः ,,
२९ चूड़ाकरण-प्रयोगः ,,
३० उपनयन-प्रयोगः १४९
३१ विवाह-प्रयोगः १५०

द्वितीयः परिच्छेदः

गुरु-प्रकरणम् १५३–१७४

१ तत्रादौ गुरु-लक्षणादिकम् १५३
२ तत्र कुलीन-गुरु-प्रशंसादिकं च १५४
३ गुरु-नाथाचार्य-शब्दानां व्युत्पत्ति-कलादिकं १५५
४ गुरु-विशेष-लक्षणादिकं च १५६
५ गुरु-माहात्म्यं १५७
६ शास्त्रे गुरोरावश्यकत्वम् ,,
७ गुरु-मन्त्र-देवतानामैक्यम् १५८
८ गुरु-तुष्ट्यादि-फलम् ,,
९ गुरु-शब्दोच्चारण-फलम् १५९
१० गुरु-शरीरे ब्रह्मादीनां स्थितिः ,,
११ गुरु-तृप्तौ जगत्-तृप्ति-कथनम् ,,
१२ सर्वेभ्यो गुरोराधिक्यम् ,,
१३ गुरु-पूजने जगत्-पूजन-कथनम् १६०
१४ दीक्षा-शिक्षा-भेदेन द्विविध-गुरु-कथनम् ,,
१५ गुरु-भेद-कथनम् ,,
१६ तत्त्वज्ञ-गुरु-करण-बीजं ,,
१७ गुरु-विशेषादि-कथनं १६१
१८ अथ स्त्री-गुरु-लक्षणम् १६२

१९ गुरौ कर्त्तव्ये वर्जनीय-कथनम् १६३
२० त्याज्य-गुरु-कथनम् १६४
२१ शिष्य-प्रकरणं, शिष्य-शब्द-व्युत्पत्तिश्च १६५
२२ शिष्य-लक्षणं ,,
२३ वर्जनीय शिष्य-लक्षणं १६६
२४ वर्ज्य शिष्य-करण-निन्दा ,,
२५ शिष्य-कर्तव्याकर्तव्यादि-कथनम्, गुर्वाज्ञा-पालन-विधिः ,,
२६ गुरोराज्ञा-लङ्घने दोषः १६७
२७ गुर्वनिष्ट-करणे दोषः ,,
२८ गुरु-शाप-जन्य दोषः ,,
२९ गुरु-निन्दा-श्रवणे दोषः ,,
३० अस्य प्रतीकारः ,,
३१ गुरु-निन्दा-करणे दोषः १६८
३२ गुरौ मनुष्य-ज्ञाने दोषः ,,
३३ गुर्वपराधादि-दोष-कथनं ,,
३४ गुरु-सन्तति-त्यागादि-निषेधः ,,
३५ गुर्वादि-मानन-प्रकारः ,,
३६ गुरु-कुल-पूजा-क्रमः ,,
३७ गुरु-दर्शन-दिन-प्रशंसा १६९
३८ गुरु-प्रीतौ फलं ,,
३९ गुरु-पूजां विना इष्ट-पूजायां दोषः ,,
४० गुर्वनुक्त-क्रिया-वैफल्यादिकं १७०
४१ गुरु-प्रणामादि-फलं ,,
४२ गुरु-गृहे कृत-पुण्य-कर्म-फलं ,,
४३ गुरु-पाद-रजो मस्तके धारण-फलं ,,
४४ गुरु-पादोदकादि-भक्षण-फलं ,,
४५ मस्तके गुरु-पादोदक-धारण-फलं १७१
४६ गुरु-पूजा तदन्न-भक्षणादि-फलं च ,,
४७ गुरु-पुत्राद्युच्छिष्टादि-माहात्म्यम् ,,
४८ गुरूच्छिष्टाभक्षणे दोषः ,,
४९ गुरु-समीपे महा-पीठादौ च पाद-प्रक्षालनादि-निषेधः १७२
५० गुर्वाज्ञया निषिद्धाचरणे दोषाभावादि-कथनं ,,
५१ गुर्वग्रे मानादि-निषेधः ,,
५२ गुरु-भक्ति-फलं ,,

५३ गुरु-भक्त्यनुत्पत्तौ दोषः १७३
५४ गुरु-स्त्री-पुत्र-बन्धूनां दोष-प्रकाशः, तद्-द्रव्य-भक्षण-निषेधादिकं ,,
५५ गुरु-शुश्रूषादिकं १७४
५६ गुरु-मित्र-सुहृदादीनां अवमानादि-निषेधः ,,

तृतीयः परिच्छेदः

गुरु-शिष्य-विचाराद्यंकुरारोपणान्त-कर्म-कथनं १७५-१९५
१ दीक्षादौ गुरु-शिष्य-मन्त्राणां नाड़ी-नक्षत्र-विचार-कथनं १७५
२ दीक्षायां चक्रादि-विचारः ,,
३ तत्र मण्डपार्थं भूमि-परीक्षा १७६
४ दीक्षायां वर्जनीय-भूमि-कथनं ,,
५ तत्र-दिक् प्लव-भूमि-शुभाशुभं ,,
६ ब्राह्मणादि-भूमि-ज्ञान-करणं ,,
७ तत्र शुभ-भूमि-कथनं १७७
८ तत्र मध्यमाधम भूमि-कथनम् ,,
९ तत्र शल्योद्धारं बिना दोष-कथनं १७८
१० तत्र शुभ-फल-कथनं च ,,
११ शल्योद्धार-धनोद्धारौ ,,
१२ मण्डपादि-पूर्वादि-ज्ञान-निर्णयः १८६
१३ तत्र शंकु-निखनन-प्रकारः १८७
१४ तत्र शंकु-सूत्र-करणं तत्र शुभाशुभ-कथनं च ,,
१५ मण्डप-करणम् ,,
१६ तत्रांकुरार्पणादिकम् १८९
१७ मण्डल-करण-प्रयोगः १९२
१८ अस्य मार्जन-प्रकारादिकम् ,,

चतुर्थः परिच्छेदः

अधिवास-रूप-पुष्प-कथनम् १९६-२१२
१ दीक्षा-शब्द-व्युत्पत्तिः १९६
२ दीक्षा-माहात्म्यं ,,
३ दीक्षा-प्रशंसा १९७
४ दीक्षायां विशेषः ,,
५ दीक्षा-ज्येष्ठत्वादि-कथनं ,,
६ तत्रैक-मन्त्र-साधन फलं १९८

७ दीक्षाया अकरणे दोषः १६८
८ निन्द्य-दीक्षा-कथनं ,,
९ दीक्षा-विधि-कथनं ,,
१० नाम-क्रिया-भेदेन दीक्षा-भेदाः ,,
११ दीक्षा-फल-कथनं २००
१२ तत्राधिवास-विधिः ,,
१३ अंकुरारोपण-प्रयोगः २०८
१४ अधिवास-प्रयोगः २१०

पञ्चमः परिच्छेदः

दीक्षा-रूप-फल-कथनम् २१३—२२९
१ दीक्षा-प्रकरणं २१३
२ तत्र वृद्धि-श्राद्धादिकं ,,
३ तत्र पञ्च-देव-पूजा २१४
४ तत्र ग्रह-पूजा ग्रह-मन्त्रोद्धारः ,,
५ ग्रह-पूजा-क्रमः २१५
६ ग्रह-पुरश्चरणादिकं ,,
७ ग्रह-दानादिकं ,,
८ ग्रह-कवचादिकं २१६
९ दीक्षादौ तिथि-पूजा २१७
१० तिथि-ध्यान-मन्त्र-ध्यानादिकं ,,
११ पक्ष-ध्यानादिकं २२०
१२ तिथि पक्ष मन्त्र-ध्यानादिकं ,,
१३ तिथि-पूजाद्यकरणे दोषः २२१
१४ तिथि-कवचादिकं ,,
१५ अकारादि-वर्णानां ध्यानं २२२
१६ वर्ण-ध्यानाकरणे दोषः २२८
१७ अकारादि-वर्णानां पूजा-मन्त्र-कथनं २२९

षष्ठः परिच्छेदः

नाना-विधा-दीक्षा-कथनम् २३०—२४७
१ दीक्षादौ पूजा-क्रमं च २३०
२ तत्र होमादि-विधिः २३४
३ तत्राध्वादि-शोधन-विधिः ,,

४ अभिषेक-विधिः — २३६
५ अभिषेक-फलं च — ,,
६ अभिषेक-मन्त्राः — २३८
७ आणवी-दीक्षा-विधिः—अस्या भेद-कथनम् — २४१
८ तत्र वर्ण-मयी दीक्षा — २४२
९ कलावती दीक्षा — २४३
१० वेध-मयी दीक्षा — ,,
११ क्रम-दीक्षा-विधिः — ,,
१२ कलौ तान्त्रिक-संस्कार-पत्र-रत्न-दीक्षादिकं — २४४
१३ देवता-भेदे मन्त्र-लिखन-प्रकारादिकं — ,,
१४ देवता-विशेषे मन्त्र-लिखन-द्रव्य-कथनं — ,,
१५ तत्तद्-देवता-प्राण-प्रतिष्ठादि-कथनं च — ,,
१६ तत्र सूर्यार्घ्य-दानं अर्घ्य-द्रव्य-कथनं च — ,,
१७ प्रबल-कलि-लक्षणम् — २४६
१८ कलेरुपशम-प्रकारः — ,,
१९ कलेर्गुण-कथनादिकं — २४७
उद्धृत ग्रन्थ एवं तन्त्रज्ञ-नामावली — २४९




# दो शब्द

संस्कृत में तन्त्र-शास्त्र का अपार साहित्य हस्त-लिखित रूप में देश में यत्र-तत्र छिपा पड़ा है। कुछ ग्रन्थों का प्रकाशन भी हुआ किन्तु प्रतियाँ सीमित संख्या में प्रस्तुत की गईं। उनके समाप्त होने पर दुबारा न छपने से ऐसे प्रकाशित ग्रन्थ भी दुर्लभ होते गये। मूल तन्त्रों के बिना तान्त्रिक सिद्धान्तों का यथार्थ ज्ञान कैसे प्राप्त हो ? अतः धर्म-संरक्षक महा-पुरुषों द्वारा समय-समय पर उक्त दुर्लभ साहित्य के प्रकाशन का प्रयास होता रहा है और आज भी हो रहा है।

'कौल-कल्पतरु' पण्डित देवीदत्त शुक्ल का मत था कि संस्कृत भाषा के ग्रन्थों को भी यदि सम्पादित कर आधुनिक चिन्हों से युक्त करके प्रकाशित किया जाय, तो उन्हें पढ़ने और समझने में लोगों को अधिक सुविधा हो सकती है। उन्हीं के निर्देशानुसार हमारे सभी प्रकाशनों में संस्कृत भाषा आधुनिक ढंग से सम्पादित रूप में ही मुद्रित की जा रही है।

प्रस्तुत 'प्राण-तोषिणी तन्त्र' अनेक प्राचीन ग्रन्थों के आधार पर सन् १८२१ में अर्थात् लगभग पौने दो सौ वर्ष पूर्व श्री रामतोषण द्वारा बंगाल के प्रसिद्ध विद्या-प्रेमी जमींदार श्री प्राणकृष्ण विश्वास (१७६४-१८३४) के संरक्षण में लिखा गया था। इसका प्रकाशन कलकत्ते के श्रीजीवानन्द विद्यासागर द्वारा वर्षों पूर्व पुरानी शैली में किया गया था, जो बहुत समय से अप्राप्य है। पहले पहल आधुनिक रूप में इसे सम्पादित कर इसके प्रथम दो काण्ड इस पुस्तक-रूप में आज प्रस्तुत किए जा रहे हैं। इन्हीं दो काण्डों (सर्ग-काण्ड एवं धर्म-काण्ड) का हिन्दी-रूपान्तर भी पहली बार 'हिन्दी प्राण-तोषिणी तन्त्र' नाम से अलग प्रकाशित किया जा चुका है। शेष पाँच काण्डों (अर्थ, काम्य, भक्ति, ज्ञान और निर्गुण) का भी प्रकाशन इसी प्रकार किया जायगा।

हमें आशा है कि 'प्राण-तोषिणी तन्त्र' के इस नवीन संस्करण एवं उसके हिन्दी-रूपान्तर से तन्त्र के जिज्ञासुओं का विशेषतया ज्ञान-वर्द्धन हो सकेगा।

प्रयाग, ज्येष्ठ पूर्णिमा २०४०

—'कुलभूषण'

# प्रथमः परिच्छेदः

## वीज-स्वरूप, शब्द-प्रादुर्भाव, रूपाकर-कथनम्

### १ मङ्गलाचरणं

जड़े काव्यं दात्री द्रुतमुदक-विन्दौ जलधितां
पयोधौ पाथोऽणुत्वमपि ननु सर्वैक-वशगा।
गिरौ धूली-लेशत्वमचल-वरत्वं रजसि वा
विचित्रेच्छा स्वैरं जयति जय तारे ! तव नवा ॥
यत्-पादाम्बुज-सेवया प्रतिदिनं कर्म क्षणाल्लीलया
ब्रह्मोपेन्द्र-महेश्वर-प्रभृतयः कुर्वन्ति सृष्ट्यादिकम्।
यामाराध्य मनुत्वमाप सुरथो ज्ञानं समाधिः स्वयं
सास्माकं वितनोतु वाञ्छित-फलं तस्यै भवान्यै नमः ॥

### २ ग्रन्थकार-परिचयः

आसीद् विश्वास-वंशे विमल-मति दयाराम-विश्वास-नामा
तत्-पुत्रोऽत्यन्त-दान्तोऽप्यतिशय-सुकृतो रामहर्याह्वयोऽसौ।
विश्वासो विश्वनाथार्चन-चरण-रतो विश्व-विश्वास-वासो
वाराणस्यामुषित्वा बहु-विधमपि सत्कर्म कृत्वाप मुक्तिम् ॥
तत्-सूनुर्भूमि-पालो विविध - बुध - गणैकाग्र-गण्योऽति-धन्यो
मान्यः श्रीप्राण-कृष्णो यदनुजनु-जगन्मोहनाख्यः प्रसिद्धः।
पुत्राः षड् यस्य जाताः सुविमल-मतयो धैर्य-गाम्भीर्यवन्तो
दीनानाथान्ध-बन्धु-द्विज-गण-भरणैकान्त-विभ्रान्त-चित्ताः ॥
तत्रानन्द-मयो महेश - महिषी - ध्यानावधानः सदा
ज्येष्ठः श्रेष्ठतमः सदैव सदयो दारिद्र्य-विद्रावणः।
तस्योपेन्द्र-समः कृती भगवती-भक्तो भवानी-पति-
श्रीपादाम्बुज - युग्म - लुब्ध - मधुपः श्रीरामचन्द्रोऽनुजः ॥

दाता कर्ण-समो रणेऽर्जुन-समः शत्रौ कृतान्तोपमो
दाता दीन-दयामयस्तदनुजः श्रीविश्वनाथस्तथा ।
श्री-युक्तः शम्भुनाथस्तदनु समभवत् सुन्दरस्तस्य पश्चात्
श्रीकाशीनाथ-नामा तदनुज उदितश्चन्द्रवच्चन्द्र-नाथः ॥
स्वर्धुन्याः पूर्व-तीरे सुर-चिर-निलयः खड्दहाख्यः प्रसिद्धो
नित्यानन्दादि-सिद्धाश्रम-विहित-महाशुद्ध-इन्द्रालयाभः ।
ग्रामो जीयान्महर्द्धिः कृत-शुभ-निलयाराम-भीमालयाढ्यः
कैल्कातातो नगर्याः क्षिति-पति-नगरादुत्तरे याम-गम्यः ॥
तस्मिन् श्रीप्राण-कृष्णो निवसति निखिल-स्वीय-निर्धूत-तृष्णो
जिष्णोस्तुल्योऽति-मूल्योत्तम-मणि-गण-सम्पूर्ण-कोषाधिपालः ।
श्रीमान् धीमान् स्व-कीर्त्या विधुरिव भुवि विश्वास-वंसावतंसः
साक्षात् सूर्यः प्रतापैररि-तृण-दहनो जीवतात् स प्रजाभिः ॥

अपि च—

ज्योतिर्ग्रन्थान् बहु-विधानालोक्य बहुभिर्बुधैः । संग्रहं कारयामास प्राण-कृष्ण-क्रियाम्बुधिम् । ततो नानाभिधानानि समालोक्य समासतः । प्राण-कृष्णीय-शब्दाब्धि कारयामास यत्नतः ॥ तन्त्राणि बहुधा नाना-देशादाहृत्य तत्परम् । खाभ्रेषु-सम्मितं नाना-संग्रहं च कृतं बुधैः । संग्रहे जयसिंहादि-नृपाणां नाम-दर्शनात् । चिरं मृतानां ग्रन्थस्थ-नाम्नाद्यापि सुजीवताम् । ग्रन्थ-कीर्ति वरां मेने सर्व-कीर्तेरनश्वराम् । ग्रन्थं कारयितुं धीरं यत्नतोऽन्वेषयत् कृती । न लेभे सहसा तेन सदा चिन्ता-परः स्थितः । अथ श्रीशिव-पादाब्ज-भ्रमरी-कृत-मानसः । कैल्काता-नगरे रम्ये चकार मठमेव यः । श्रीगोपीनाथ-मिश्रेणानीय तं राम-तोषणम् । श्रीप्राण-कृष्ण-विश्वासो विश्वास-वंश-भास्करः । आदिष्टवांस्तन्त्र-शास्त्रोत्तम-संग्रह-हेतवे ।

समस्त-ज्ञान-दातॄन् षड्-गुरून् नत्वा सहस्रशः । मुण्ड-मालां मत्स्य-सूक्तं तन्त्रं महिष-मर्दिनीम् । मायां च मातृका-भेदं मातृकोदयमुत्तमम् । महा-निर्वाण-तन्त्रं च मालिनी-विजयं तथा । महा-नीलं महाकाल-संहितां मेरु-तन्त्रकम् । भैरवं भैरवीं भूत-डामर-द्वयमेव च । वीर-भद्रं वीज-चिन्तामणिमेक-जटीं तथा । निर्वाण-तन्त्रं त्रिपुरा-सारं काली-विलासकम् । विश्वसारं च वरदां वासुदेव-रहस्यकम् । वाराहीं च वृहद्-गौतमीयं वर्णोद्धृतिं तथा । विश्व-

साराख्य-तन्त्रं च विष्णु-यामलमेव च। वृहन्नील वृहद्-योनि रहस्यं विष्णु-सम्मतम्। वाभ्रकेश्वर-तन्त्रं च ब्रह्म-ज्ञानं ततः परम्। ब्रह्म-यामलमद्वैतं वर्ण-विलासमेव च। फेत्कारिणीं तथा तन्त्रं पुरश्चरण-चन्द्रिकाम्। पुरश्चार-रसोल्लासं तन्त्रं पञ्च-दर्शीं शुभाम्। पिच्छिलां प्रपञ्च-सारं हंसाद्यं पारमेश्वरम्। नव-रत्नेश्वरं नित्यं नीलं नारायणीयकम्। निरुत्तरं नारदीयं नागार्जुनमतः परम्। दक्षिणामूर्ति-तन्त्रं च दक्षिणामूर्ति-संहिताम्। दत्तात्रेय-संहितां चाष्ट-वक्र-संहितां तथा। यक्षिणीं योगिनीं योनिं योग-सारं तदर्णवम्। योगिनी-हृदयं योगि-याज्ञवल्क्यमनुत्तमम्। योगम्बरोदयं चैवाकाश-भैरवमेव च। राज-राजेश्वरीं राधां रेवतीं रुद्र-यामलम्। रामार्चन-चन्द्रिकां च सावरं चेन्द्र-जालकम्। काली-तन्त्रं च कामाख्यां कामधेनुमतः परम्। श्रीकाली-कुल-सर्वस्वं कुमारी-तन्त्रमेव च। कृकलास-दीपिकां च कङ्काल-मालिनीं तथा। कालोत्तरं कुब्जिकां च कुलोड्डीयं कुलार्णवम्। कुल-मूलावताराख्य-कल्प-सूत्रं यक्ष-डामरम्। सरस्वतीं सारदां च शक्ति-सङ्गम-तन्त्रकम्। शक्ति-कागम-सर्वस्वमूर्द्धाम्नायं स्वरोदयम्। स्वतन्त्र-तन्त्रं सम्मोहं चीनाचारं च तोडलम्। षडन्वय-महा-रत्नं सिद्धैक-वीर-तन्त्रकम्। निगमस्य कल्पद्रुमं लतां तत्सारमेव च। तारा-रहस्यं श्रीश्यामा-रहस्यं स्कन्द-यामलम्। इत्याद्यनेक-तन्त्राणि पुराणं पञ्च-रात्रकम्। श्रुति-स्मृति-संग्रहांश्च दृष्ट्वान्य-शास्त्रमेव च। रत्नान्येभ्यः समाहृत्य रत्नाकरेभ्य एव च। श्रीरामतोषणेनेयं रोपिता प्राण-तोषणी॥

### ३ ग्रन्थ-प्रशंसा

कल्पद्रुमो दिशति वाञ्छितमेव चिन्त्यं चिन्ता-मणिः क्वचन कामदुघा त्वभीष्टम्। श्रीप्राण-तोषण-कृता व्रततिर्जनेभ्यो दृष्टैव यच्छति फलं भुवि सर्व-देयम्। एतामक्षर-मालिकां न मनुतामज्ञः स्वभावोज्ज्वलां नाना-रत्न-मयीं विलोकयतु सद्गुर्वङ्घ्रि-कारुण्यतः। विश्वं पश्यति मन्द-धीर्हत-धिया प्रत्यक्ष-मेतज्जगद्-ब्रह्मैवेति विलोकते स गुरुतो वैराग्यवांश्चेत् तदा। आशा-वात-प्रौढ़-तुङ्गोत्तरङ्गेऽपारे सारे हाभ्रमौ घोर-सिन्धौ। जीर्णां नौकामाश्रितस्येष्ट-सिद्ध्यै भीतस्यैधि त्वं गुरो! कर्ण-धारः। इमां मत्सरिणो दोष-दृष्ट्योपहसतः प्रति। तथ्यं वदामि श्रुत्वा यद् रोचते कुर्वतां तु तत्। मान्याः! कृताञ्जलिरहं विनयेन वच्मि सर्वाण्यमुत्र गुरु-वृद्ध-वचांस्यमूनि। सज्जी-चकार लतिकावयवा-

नमभोर्दोषा न मे न च गुणाः परिवेत्थ धीराः। गृह्णन्ति ये गुण-कणानिव दोष-राशेः पङ्केरुहाङ्क-मलिनेऽन्य-पिकालिकस्ते। पश्यन्तु मादृश-विनिर्मित-चित्र-वल्लीं रत्नोज्ज्वलां शुभ-वरीमुपसर्पकाणाम्। वल्लीयं सर्ग-धर्मार्थ-कमन-भजन-ज्ञान-नैर्गुण्य-सप्त-काण्डा-चित्र-प्रसूनच्छद-मुकुल-फला कोरकाद्यैर्विचित्रा। नाना-विद्यार्थ-वादारुण-किरण-महा-स्विन्न-चिंताकुलानां स्थेयः सिद्धान्त-रूप-प्रकृत-वचनजच्छाययार्ति निहन्तु। वैवस्वतान्तर-गतस्य गजाक्षि-संख्यस्येयं युगस्य चरणेऽजनि तूर्य-संख्ये। भू-नेत्र-धर्म-युग-सम्मित-वीत-वर्षे राधे दिने गुण-मिते मृदुला हिमांशोः॥ शाके नेत्र-युगाद्रि-काश्यपि-मितेऽतीतेऽक्षयायां तिथावेषा प्रादुरभूद् विचक्षण-मनः-कह्लार-संह्लादिनी। विप्र-श्रीयुत-रामतोषण-कृता श्रीप्राणतोषण्यस्यौ सोम-क्षेम-सरस्वती-मयतया न्यक्कुर्वतीत्थं त्विषा॥ वाणी श्रीप्राणतोषण्यसि सकल-गुणा वज्र-दृग्-दीप्त-देहा नित्यं स्निग्धा नवीना नव-रस-रुचिरा रोपितारामं-मध्ये। किन्त्वाराद्-वृद्ध-मूर्तिर्जगदिदमनुगन्तासि दुष्टार्थ-बुद्ध्या मन्दानर्थाभिमानान्धित-खल-धिषणान् देवि! तुभ्यं नमोऽस्तु॥

## ४ ग्रन्थस्यानुक्रमणिका

प्रति-काण्डं नमस्कृत्य देवतां विघ्न-नाशिनीम्। काण्डानि निर्ममे सप्त-रत्नोद्दीप्ति-कराण्यहम्॥ आशांशुका शुचि-शशीनदिगभ्र-कृष्णा पञ्चाशदर्ण-घटिता त्वगनन्त-मूर्तिः। ध्यातेष्टदा गलित-कुन्तल-भार-रम्या क्षेमाय नो भवतु सम्प्रति मालकान्ता॥

## ५ ग्रन्थस्य काण्ड-परिच्छेदादि-निरूपणम्

आद्यं नूतन-सर्ग-काण्डममलं यत्रास्ति शब्दाकरो नित्यानित्य-विचार-शब्द-जनि विष्ण्वोषध्युडु-व्योमगाः। भूतोद्भूतमिदं चराचरमपि ब्रह्म-ध्वनिर्जन्तुतो वर्णान् प्रेरयतीति लेखन-विधिर्वर्णाभिधानादि च॥ नृणा-मत्र प्रवृत्यर्थमादौ निर्घण्टनं मया। केषाञ्चित् क्रियतेऽन्यानि भूयांसि वेत्तु तान्यपि॥ आदौ तन्त्र-प्रशंसादि वर्णाविर्भाव-कारणम्। शिव-शक्त्याविर्भवनं तदवस्था-निरूपणम्। त्रिविधं शक्ति-रूपं तु ब्रह्मादेः शक्ति-निर्णयः। शक्तिं बिना जाड्यमेषां शब्द-ब्रह्म-निरूपणम्। शब्द-ब्रह्म-पर-ब्रह्म-मूर्तिरीशस्य शाश्वती। इति सर्गाद्य-काण्डस्य परिच्छेदस्तथादिमः॥ १॥

अर्थाभिव्यक्तये शब्द-स्फोट-वाद-निरूपणम्। प्रसिद्धानित्य-रूपे द्वे पत्रे

नित्यस्य कीर्तिते। अनित्य-मत-दोषश्च प्रसिद्ध-मत-निर्णयः। शब्दो ब्रह्मेति शब्दार्थो ब्रह्मेति मत-दूषणम्। नित्य-मते पूर्व-पक्ष-सिद्धान्तौ च निरूपितौ। शरीरं तत्त्व-षट्-त्रिंशन्निर्मितं कंचुकान्वितम्। शशीनाग्नि-कला-वर्णोद्भवाश्चापि कलास्ततः। वर्णजाः सशक्ति-विष्णु-रुद्राश्चौषधयस्तथा। प्रयोजनं चौषधीनां हंसो विकृतिजाक्षरम्। तद्-विकृतेः प्रकारश्च प्रणवाद् हंस-सम्भवः। सह नाशे तत्-प्रणव-स्थितेर्निदर्शनं तथा। वर्णानां नित्यता-बोध-कारणं साधकान्तरम्। मत-द्वये तु वेदानां नित्यानित्यत्व-दर्शनम्। तथ्यं नित्यत्वमेतेषां युक्ति-दृष्टि-प्रमाणकैः। वर्णेभ्यो ग्रह-राश्यृक्षोत्पत्तिश्चक्र-भ्रमात्मिका। अमावास्याद्युद्भवश्च नक्षत्र-वृक्ष-निर्णयः। स्व-नक्षत्र-वृक्ष-मात्रच्छेदने दोष-दर्शनम्। ऋक्षाधिष्ठातृ-देवाश्च नक्षत्र-योनि-निर्णयः। तद्-विरोध-दर्शनं च दम्पत्यादि-विचारणे। तिथि-भेद-दर्शनं च तिथ्यधिप-निरूपणम्॥ इत्यंकुर-परिच्छेद-द्वितीयस्य समापनम्॥ २॥

सदाशिवादेरुत्पत्तिर्लवादि-काल-निर्णयः। तत्व-सृष्टयारम्भणं चाहङ्कारस्य त्रिधाकृतिः। त्रिविधाहंकृतेः सृष्टिः शब्दादेर्भूत-सम्भवः। भूत-मण्डल-रूपाणि देह-सृष्टिश्चतुर्विधा। पञ्चीकृति-प्रकारश्चोद्भिदुत्पत्तिस्ततः परम्। पापेनोद्भिद-योनिस्तत्-प्रायश्चित्तं ततः परम्। स्वेदजोत्पत्ति-कथनमण्डजोत्पत्तिरेव च। मनुष्यत्व-प्रशंसा च जन्म-मृत्यु-क्रमस्तथा। प्रकृत्या जायते सर्वं तस्यां संलीयते पुनः। इति शाखा-परिच्छेद-तृतीयस्य समापनम्॥ ३॥

रजस्वलाया गर्भस्थात् पुं-वीर्याद्-गर्भ-सम्भवः। रजस्वला-निदानं च गर्भे वीर्य-गति-क्रमः। स्त्री-पुं-नपुंसकोत्पत्ति-कारणं तदनन्तरम्। बह्वपत्यत्वादि-बीजं बल-वद्-गर्भ-कारणम्। जीव-प्रवेशनं तत्र शुक्राद्युत्पत्ति-कारणम्। स्वेद-मूत्र-पुरीषाणामुत्पत्ति-त्यागयोः क्रमः। रोगोत्पत्तेः कारणं च धातूत्पत्ति-क्रमस्ततः। प्राणादीनां क्रियां पश्चात् कललादि-निरूपणम्। मल एष विवेकश्च मांस-पिण्डांकुरस्तथा। मेदोमज्जादि-सम्भूतिरङ्ग-प्रत्यङ्ग-सम्भवः। अभीष्ट-दानं मातुस्तत्फलादि-निर्णयस्तथा। त्वक्-श्रुत्यादि-समुद्भूतिः सन्धेः सम्पूर्णता तथा। दोष-दूष्यादि-निर्णीतिरिन्द्रियादि-निरूपणम्। अन्तःकरण-निर्णीतिस्तत्त्वानां पञ्च-विंशकम्। पञ्च-भूत-गुणैर्देहो दश-वायु-निरूपणम्। नाड़ी-निरूपणं नाड़ी-कन्दो द्वार-स्थिताः शिराः। शाखा-प्रशाखा नाड़ीनां ततः स्थान-निरूपणम्। अस्थ्यस्थि-सन्धि-पेश्यादि स्त्रीणां पेश्यधिका मता। प्रशाखा-नाम-विच्छेद-चतुष्कस्य समापनम्॥ ४॥

वायु-नामानि वायूनां मुख्यत्वादि-विनिर्णयः । तेषां रूपाणि स्थानानि कर्माणि च पृथक्-पृथक् । पिङ्गलेडा-गते प्राणे सूर्या-चन्द्रमसोर्गतिः । दोष-दूष्याग्नि-नामानि चोर्मि-कोल-निरूपणम् । क्षेत्रज्ञस्यार्थ-ग्रहण-प्रकारस्तद-नन्तरम् । श्रोत्रादौ खादि-संस्थानं प्राधान्येन निर्दशितम । वात-पित्त-कफैर्नुन्न-धातु-भीरोग-सम्भवः । पूर्वादृष्ट-स्मृतिर्गर्भ-स्थिति-लक्षणमत्र तु । गर्भाशय-प्रमाणं तु त्रिविधं कर्म तत्परम् । गर्भे चिन्ता-प्रकारश्च निश्चेष्टा तदनन्तरम् । देहस्थाक्षर-वृत्तान्तं भुवनानि चतुर्दश । तनावद्रि-द्वीप-खेट-राशि-नक्षत्र-संस्थितिः । शुक्रासृग्भ्यां रक्त-विन्दु-दर्शनादेश्च सम्भवः । सूर्या-चन्द्रमसोः स्थानं ब्रह्मादीनां तथैव च । गर्भाच्छिशोर्निःसरणं पूर्वोदान्तस्य विस्मृतिः । गर्भा-न्निर्गम-काले तु पापिनामधिका व्यथा । रोदनानेहसि तदा नादावस्था-निरू-पणम् । देहावस्था पुनर्देह-प्राप्तिः कर्मानुसारतः । ऐहिकस्य प्रेत्य भोगः कर्मणो जायते ध्रुवम् । इति पल्लव-रूपेषु परिच्छेद-समापनम् ॥ ५ ॥

अस्पष्टाक्षर-भाषा तु श्रुति-मार्गाविभागतः । कुण्डली-स्फूर्तिरेकादि-पञ्चाशद्धा यदा भवेत् । गुणिता सा तदा शब्दार्थाद्युद्भूतिः क्रमेण च । पञ्चा-शत् काम-नामानि रति-नामानि च क्रमात् । सशक्तिक-गणेशान-नामानि तदनन्तरम् । क्षेत्रपालस्य नामानि तत्पूजादि-फलं ततः । मुखाद् वर्ण-प्रकाश-स्तत्-प्रकाशान्ते तु विस्मृतिः । वर्ण-प्रकाश-स्थानानि चन्द्र-सूर्याग्निजाक्षरम् । सर्वे विसर्गजा वर्णा अष्ट-स्थान-निरूपणम् । वर्णोच्चार-क्रमाः पाञ्चभौति-काक्षर-निर्णयः । इति स्तवन-रूपर्त्तु-परिच्छेद-समापनम् ॥ ६ ॥

पत्रारूढ़ाक्षर-तनु - निदानं च लिपि-क्रमः । अकारादि-क्षकारान्त-वर्णानां दैवतैः सह । भूमौ लिपि-निषेधादि-लेखनी-नियमस्ततः । पुस्तकस्य ततो मानं पुस्तकच्छिद्र-निर्णयः । पुस्तिका-पत्र-निर्णीतिर्वेद-लेखन-निन्दनम् । युग-भेदेऽक्षरे देव-भेदो लेखक-पूजनम् । आरम्भादौ लेखकस्य वेतन-ग्रह-दूष-णम् । इति कोरक-विच्छेद-सप्तमस्य समापनम् ॥ ७ ॥

ॐकारादि-क्षकारान्त-नामानि कुसुमानि च । तन्त्र-संकेत-कारीण्य-ष्टमच्छेद-समापनम् ॥ ८ ॥

पञ्च-वक्त्रोद्भवा मन्त्रास्तन्त्रादि-शास्त्रमेव च । गणेशेन सर्व-तन्त्र-विस्तार-करणं ततः । महा-महादि-विद्यानां वीजत्वं तदनन्तरम् । तथाष्टादश-विद्यानां दर्शनानां च निर्णयः । ईश्वरस्य शक्ति-समावेशाच्छास्त्रादि-कर्तृता ।

मनुष्य-प्रभृतीनां च शास्त्र-कर्तृ-निरूपणम् । आन्वीक्षिक्यादि-निर्णीतिर्गृहिणां न तु मानसम् । पापमीशो द्विधात्मानमकरोत् तस्य कारणम् । तन्त्रावतार-वीजं च पञ्च-वक्त्राह्वयस्तथा । पञ्च-वक्त्रस्य रूपं च पञ्चाम्नाय-निरूपणम् । षडाम्नायस्य कथनमाम्नाय-भेद-देवता । आम्नायानां फलं चैव तथाशु फल-निर्णयः । आम्नाय-भेद-मन्त्राणामाचारादि-निरूपणम् । अपवादोत्सर्गतया विद्या-शास्त्र-विनिर्णयः । मन्त्र-विद्या-विभागश्च देवता-भेदतस्तथा । स्त्री-पुं-नपुंसकत्वं च मन्त्राणां षट्सु कर्मसु । मन्त्राणां क्रूर-सौम्यत्वं स्वप्न-जागरणादिकम् । इति केशर-विच्छेद-नवमस्य समापनम् ।। ९ ।।

छिन्नादि-दोष-निर्णीतिर्मन्त्राणां तत्-प्रतिक्रिया । महा-मुद्रा-लक्षणं च योनि-मुद्राकृतिस्तथा । कण्ठासन-लक्षणं च षट्-चक्रेष्ट-स्मृतिर्यथा । सहस्रा-राम्बुजे ध्यानमिष्ट-देव्यास्ततः परम् । पुनर्मूलाधार-पद्मादिषु चिन्ता-क्रम-स्तथा । मन्त्राक्षरस्य चिच्छक्तौ प्रोतानन्तर-कर्म यत् । तत्-फलं सम्वत्सरे-णाभ्यासात् सिद्धिरनुत्तमा । असक्तस्य योनि-मुद्रा-करणे तु जप-क्रमः । भूत-लिपि-निधानं च तस्या ऋष्यादि-निर्णयः । ध्यानं भूत-लिपेः प्राण-प्रतिष्ठा तदनन्तरम् । वर्ण-न्यासः पूजनं च नवावृत्तय एव च । होमश्च कामना-भेदाद् भूत-लिप्या पुटीकृतः । सहस्र-कृत्वः सञ्जप्तो मास-मात्रं यदा तदा । मनुः सर्व-सिद्धि-करो दश-संस्कार-कारणम् । वीज-नामानि वीजानां भूत-डामर-सम्मतम् । नाम-धेयमिदं व्योम-परिच्छेद-समापनम् ।। १० ।।

यद्-यत्तन्त्र-सार-कारैरस्मद्-वंशाब्ज-भास्करैः । धृतं प्रमाणं तेनात्र नास्ति किञ्चित् प्रयोजनम् । द्रष्टव्यं तत्र तत् सर्वं मन्त्र-यन्त्रादिकं तथा । न्यास-पूजादि मुद्रापि स्तवश्च कवचं तथा । माला-संस्कार-कर्मादि सर्वं तत्रास्ति केवलम् । संगृह्यास्यधृतं तेन स्मार्तेनापि क्वचित् क्वचित् । मूल-ग्रन्थानुक्रमेण व्याख्या-र्थमपि वादिनाम् । आक्षेपस्य निराकृत्यै तद्-धृतं ध्रियते मया । यत्राभिप्राय-मन्त्रं तु दर्शितं तेन सूरिणा । प्रमाणं नैव दत्तं तत् प्रमाणमपि लिख्यते । शब्दाभिप्राय-व्याख्यापि कृता यत्र महात्मना । तेन तदविदो मन्द-धियो विहसतः प्रति । स्पष्टी-करोमि तां सर्वां यथा-शास्त्रार्थ-निश्चयाम् । एष क्रमः सर्व-काण्डे विज्ञातव्यो विचक्षणैः । वीजं नव्यांकुराढ्यं तदनु समभवद् दिव्य-शाखा-प्रशाखा जातं तत्-पल्लवं तत्-स्तवक उदगमत् कोरकोऽतः प्रसूनम् । प्रोद्भूतः केशरः स्वाद्वजनि फलमिदं सर्ग-काण्डस्त्वमीभिर्विद्वन्नस्य-

ञ्जयद्राङ्-नयन-युग-मितो निर्मलं पश्य सर्वम् । धन्यो मान्यो वरेण्योऽग्र-गण्यः सत्कीर्ति-शालिनाम् । स्थिर-लक्ष्मी-निवासः श्रीयुतः स्वीयेष्ट-भक्ति-मान् । प्राण-कृष्णश्चिरञ्जीवी भवतादात्मजैः सह ।

## ६ तन्त्रशास्त्र-प्रशंसा

मुण्ड-माला-तन्त्रे अष्टम-पटले—विना तन्त्रात् विना मन्त्रात् विना यन्त्रात् महेश्वरि ! न च भुक्तिश्च मुक्तिश्च जायते वर-वर्णिनि !

मत्स्य-सूक्ते चतुर्विंशति-साहस्रे उपरि-भागे प्रथम-चरणे चतुर्थ-पटले—विष्णुर्वरिष्ठो देवानां ह्रदानामुदधिर्यथा । नदीनां च यथा गङ्गा पर्वतानां हिमालयः । अश्वत्थः सर्व-वृक्षाणां राज्ञामिन्द्रो यथा वरः । देवीनां च यथा दुर्गा वर्णानां ब्राह्मणो यथा । तथा समस्त-शास्त्राणां तन्त्रशास्त्रमनुत्तमम् । इति तन्त्र-शास्त्र-प्रशंसा ।

## ७ गृहे तन्त्र-शास्त्र-स्थिति-फलम्

बृहन्नील-तन्त्रे प्रथम-पटले—यद् गृहे निवसेत् तन्त्रं तत्र लक्ष्मीः स्थिरा-यते । राज-द्वारे श्मशाने च सभायां रण-मध्यतः । निर्जने च जले घोरे श्वा-पदैः परिभूषिते । माहात्म्यात् तस्य देवेशि ! चमत्कारो भवेत् प्रिये ! तस्मात् सर्व-प्रयत्नेन गोपनीयं प्रयत्नतः । इति गृहे तन्त्र-शास्त्र-स्थिति-फलम् ।

## ८ तन्त्रोक्त-कर्मणो हानि-निषेधः

मत्स्य-सूक्ते—यानि तन्त्रागमोक्तानि न हन्तव्यानि हेतुभिः । ईश्वरेण प्रणीतानि यस्मात् तस्माद् द्विजातिभिः । इति हेतु-वादेन तन्त्रोक्त-कर्म-हानि-निषेधः ।

## ९ ज्योतिस्तन्त्रादौ अपशब्द-निषेधः

तत्रैव—ज्योतिषे मन्त्र-वादे च वैद्यके वेद-कर्मणि । अर्थ-मात्रं तु गृह्णीया-न्नाप-शब्दं विचारयेत् । मन्त्रस्य वादो यत्र इति मन्त्र-वादस्तन्त्रमिति । ज्योतिरादौ शब्द-विचार-निषेधः ।

## १० तन्त्र-शास्त्रे संशय-निषेधः

तत्रैव—शब्दे मा संशयं कुर्याददृष्टस्त्वित कुत्र-चित् । श्रद्धातव्यं विनि-श्चित्य आनन्त्याच्छब्द-रूपतः ।

निर्वाण-तन्त्रे नवम-पटलेऽपि—शब्द-ब्रह्म-स्वरूपं च मम वक्त्राद् विनिर्ग-

तम् । सन्देहो नैव कर्तव्यो यदि मुक्तिं समिच्छति । सन्देहात् परमं याति रौरवं पितृभिः सह ।। इति तन्त्र-शास्त्रे संशय-निषेधः ।

## ११ तन्त्र-शास्त्रे विश्वास-फलम्

गन्धर्व-तन्त्रे द्वितीय पटले—सर्व-कार्येषु सर्वत्र तांत्रिके वैदिके तथा । अविश्वासो महान् दोषो यत्नतस्तं विवर्जयेत् । संसिद्धेः कारणं देवि ! विश्वासः समुदाहृतः ।। इति शास्त्रे विश्वास-फलम् ।

## १२ तन्त्र-ज्ञान-फलम्

महा-निर्वाण-तन्त्रे चतुर्दशोल्लासे—किं तस्य तीर्थ-भ्रमणैः किं यज्ञैर्जप-साधनैः । जानन्नेव महा-तन्त्रं कर्म-पाशैर्विमुच्यते । स सिद्धः सर्व-शास्त्रेषु सर्व-धर्म-विदां वरः । स ज्ञानी ब्रह्म-वित् साधु यस्तन्त्रं वेत्ति कालिके ! इति तन्त्र-ज्ञान-फलम् ।।

तत्रैव—अलं वेदैः पुराणैश्च स्मृतिभिः संहितादिभिः । किमन्यैर्बहुभि-स्तन्त्रैः ज्ञात्वैकं सर्व-विद् भवेत् । इत्येक-तन्त्रस्यापि ज्ञान-फलम् ।।

## १३ तन्त्र-शास्त्राधिकारि-कथनम्

गन्धर्व-तन्त्रे द्वितीय-पटले—आस्तिकोऽथ शुचिर्दक्षो द्वैत-हीनो जितेन्द्रियः । ब्रह्मिष्ठो ब्रह्म-वादी च ब्रह्मी ब्रह्म-परायणः । सर्व-हिंसा-विनिर्मुक्तः सर्व-प्राणि-हिते रतः । सोऽस्मिन् शास्त्रेऽधिकारी स्यात् तदन्यत्र न साधकः ।। इति तन्त्र-शास्त्राधिकारि-कथनम् ।।

## १४ कलौ तन्त्रोक्त-कर्मणा फलावाप्तिः

कुब्जिका-तन्त्रे प्रथम-पटले—श्रुति-स्मृति-विधानेन पूजा कार्या युग-त्रये । आगमोक्त-विधानेन कलौ देवान् यजेत् सुधीः । न हि देवाः प्रसीदन्ति कलौ चान्य-विधानतः ।

पुरश्चरण-रसोल्लास-तन्त्रे तृतीय-पटलेऽपि—तन्त्रोक्तं ध्यान-मन्त्रं च प्रशस्तं भारते कलौ । वेदोक्तं चैव स्मृत्युक्तं पुराणोक्तं वरानने ! न शस्तं चञ्चलापाङ्गि ! कदाचिद् भारते कलाविति ।

महा-निर्वाण-तन्त्रे द्वितीयोल्लासे च—विना ह्यागम-मार्गेण कलौ नास्ति गतिः प्रिये ! श्रुति-स्मृति-पुराणादौ मयैवोक्तं पुरा शिवे ! आगमोक्तेन विधिना कलौ देवान् यजेत् सुधीः । कलावागममुल्लंघ्य योऽन्य-मार्गे प्रवर्तते । न तस्य गतिरस्तीति सत्यं सत्यं न संशयः ।

तथा—कलौ तन्त्रोदिता मन्त्राः सिद्धास्तूर्णं-फल-प्रदाः । शस्ताः कर्मसु सर्वेषु जप-यज्ञ-क्रियादिषु । निर्वीर्याः श्रौत-जातीया विष-हीनोरगा इव । सत्यादौ सकला आसन् कलौ ते मृतका इव । पाञ्चालिका यथा भित्तौ सर्वेन्द्रिय-समन्विताः । अमूरशक्ताः कार्येषु तथान्ये मन्त्र-राशयः । अन्य-मन्त्रैः कृतं कर्म बन्ध्या-स्त्री-सङ्गमो यथा । न तत्र फल-सिद्धिः स्यात् श्रम एव हि केवलम् । कलावन्योदितैर्मार्गैः सिद्धिमिच्छति यो नरः । तृषितो जाह्नवी-तीरे कूपं खनति दुर्मतिः । नान्यः पन्था मुक्ति-हेतुरिहामुत्र सुखाप्तये । यथा तन्त्रोदितो मार्गो मोक्षाय च सुखाय च । इति कलौ तन्त्र-शास्त्रोक्त-कर्मणा फल-प्राप्ति-कथनम् ॥

### १५ तन्त्र-वक्तृ-प्रशंसा

मुण्डमालायाम्—तन्त्र-वक्ता गुरुः साक्षात् यथा च ज्ञानदः शिवः । यथा गुरुर्महेशानि ! यथा च परमो गुरुः । यथा परापर-गुरुः परमेष्ठी यथा गुरुः । यथा चैव हि मन्त्रज्ञस्तन्त्र-वक्ता गुरुः स्वयम् । इति तन्त्र-वक्तृ-प्रशंसा ॥

### १६ तन्त्रादि-निन्दा-करणे दोषः

तत्रैव—तन्त्रं च तन्त्र-वक्तारं निन्दन्ति तान्त्रिकीं क्रियाम् । ये जना भैरवास्तेषां मांसास्थि-चर्वणोद्यताः । अतएव च तन्त्रज्ञं न निन्दन्ति कदाचन । न वदन्त्यन्यथा क्वचित् ॥ इति तन्त्रादि-निन्दा-करण-दोषः ॥

### १७ तन्त्र-श्रवण-फलम्

प्रथम-पटले—शृणु देवि ! जगद्धात्रि ! सर्वं-मङ्गल-मङ्गलम् । तन्त्रं शृणुयाद् देवेशि ! ब्रह्म-निर्वाणमाप्नुयात् ।

दशम-पटले—तन्त्रराजं महेशानि ! सारात् सार-तरं प्रिये ! श्रुत्वा ज्ञात्वा मोक्षमाशु लभते नात्र संशयः ।

एकादश-पटले—शृणुयात् यो मुण्डमाला-तन्त्रं परम-कारणम् । ज्ञानदं मोक्षदं भक्ति-भुक्ति-सौख्य-प्रदं शिवे ! इत्येवं परमं देवि ! देवानामपि दुर्लभम् । यो वेद धरणी-मध्ये स एव परमार्थ-वित् ॥ इति तन्त्र-विशेष-श्रवण-फलम् ॥

निर्वाण-तन्त्रे—ज्ञानं च निर्मलं कृत्वा बुद्धिं च निर्मलां ततः । महा-भक्ति-युतो भूत्वा सर्व-प्राणि-हिते रतः । शब्द-ब्रह्म-मयं ज्ञात्वा शृणोति पटलं यदि । तदा मुक्तिमवाप्नोति सत्यं सत्यं न संशयः । अष्टादश-पुराणानां श्रवणेनैव

यत् फलम् । मेरु-तुल्य-सुवर्णं च गुरवे ब्रह्म-रूपिणे । स-शस्यां परमेशानि ! सप्त-द्वीपां वसुन्धराम् । प्रदद्याद् भक्ति-भावेन यदि स्यात् वेद-पारगः । तस्माद् वै परमेशानि ! फलं बहु-विधं शिवे ! अस्य तन्त्रस्य चार्वङ्गि ! शृणोति पटलं यदि । तत्-फलात् कोटि-गुणितं फलं स लभते ध्रुवम् । इति तन्त्रस्य पटल-मात्र-श्रवण-फलम् ॥

## १८ शक्त्युत्पत्ति-कथनम्

शब्द-ज्ञानं विना सर्वो जाड्येन परिभूयते । प्रादुर्भूतिमतस्त्वग्रे शब्दानां वक्तुमारभे । सारदातिलके प्रथम-पटले—सच्चिदानन्द-विभवात् सकलात् परमेश्वरात् । आसीच्छक्तिस्ततो नादो नादाद् विन्दु-समुद्भवः ॥ सच्चिदानन्द-विभवादित्यनेन अविद्योपहितत्वेऽपीश्वरस्य स्वरूप-हानिरिति राघव-भट्टः । सकलात् सप्रकृतिकादीश्वरात् शक्तिरासीदिति योजना । तथा च तत्रैव—निर्गुणः सगुणश्चेति शिवो ज्ञेयः सनातनः । निर्गुणः प्रकृतेरन्यः सगुणः सकलः स्मृतः ॥ इति कला प्रकृतिस्तया सह वर्तमानादिति तद्-व्याख्यानं च । ननु शक्ति-सहितादेव पुनः शक्तिः कथमासीदिति चेत् सत्यं या अनादि-रूपा चैतन्याध्यासेन महा-प्रलये सूक्ष्मतया स्थिता तस्या गुण-वैषम्यात्तु सगुणतया सात्विक-राजस-तामस-स्रष्टव्य-प्रपञ्च-साधने तद्-गुणावस्थाने वोपचारादुत्पत्तिरिति सांख्य-मतमाश्रित्य ग्रन्थ-कारस्योक्तिरियमिति ज्ञेयम् ।

तथा च मार्कण्डेय-पुराणे—देवानां कार्य-सिद्धयर्थमाविर्भवति सा यदा । उत्पन्नेति तदा लोके सा नित्याप्यभिधीयते ।

राघव भट्ट-धृत-प्रयोग-सारश्च—तस्माद् विनिर्गता नित्या सर्वगा विश्व-सम्भवा । विश्वेषां सम्भवो यस्या इति । तद्धृत-वायवीय संहितापि—शिवेच्छया परा शक्तिः शिव-तत्त्वैकतां गता । ततः परिस्फुरत्यादौ सर्गे तैलं तिलादिवेति ।

## १६ सृष्टि-प्रकरणम्

कुब्जिका-तन्त्रे प्रथम-पटले तु—आसीद् विन्दुस्ततो नादो नादाच्छक्तिः समुद्भवा । नाद-रूपा महेशानि ! चिद्-रूपा परमा कला । नादाच्चैव समुत्पन्ना अर्द्ध-विन्दुर्महेश्वरि ! सार्द्ध-त्रितय-विन्दुभ्यो भुजङ्गी कुल-कुण्डली । त्रिगुणा सगुणा देवि ! ब्रह्म-रूपा सनातनी । चैतन्य-रूपिणी देवी सर्व-भूत-प्रकाशिनी । आनन्द-रूपिणी देवी ब्रह्मानन्द-प्रकाशिनी । इति विन्दोरादौ उत्पत्तिर्योक्ता सा आम्नाय-भेदेन अविरुद्धेति । स चाम्नाय-भेदोऽग्रे स्फुटी भवि-

ष्यति। इति सगुण-शिवाच्छक्त्युत्पत्तिः। तस्याः शक्तेस्तु नाद-विन्दु-सृष्ट्युपयोग्यवस्था-रूपौ। तदुक्तं प्रयोग-सारे—नादात्मना प्रबुद्धा सा निरामय-पदोन्मुखी। शिवोन्मुखी यदा शक्तिः पुं-रूपा सा तदा स्मृता। इति शक्त्यवस्था-भेदः॥

## २० तत्र त्रि-विध विन्दु-कथनम्

इच्छा-सत्वादि-रूपतया विन्दुरपि त्रिविध उक्तः सारदातिलके कान्यकुब्ज-वासिना जगद्गुरुणा लक्ष्मणाचार्येण—शिव-शक्ति-मयः साक्षात् त्रिधासौ भिद्यते पुनः। असौ विन्दुः शिव-मयः शक्ति-मय उभय-मयश्चेति त्रिविधः। त्रिविधस्य स्वरूपमुक्तं तत्रैव—विन्दुर्नादो बीजमिति तस्य भेदाः समीरिताः। विन्दुः शिवात्मको बीजं शक्तिर्नादस्तयोर्मिथः। समव्ययः समाख्यातः सर्वागम-विशारदैः। क्रिया-सारेऽपि—विन्दुः शिवात्मकस्तत्र बीजं शक्त्यात्मकं स्मृतम्। तयोर्योगे भवेन्नादस्ताभ्यो जातास्त्रि-शक्तयः। इति त्रि-विन्दु-कथनम्॥

## २१ त्रि-विध शक्ति-कथनम् च

शक्ति-त्रयमुक्तं तत्रैव—रौद्री विन्दोस्ततो नादात् ज्येष्ठा बीजादजायत। वामा ताभ्यः समुत्पन्ना रुद्र-ब्रह्म-रमाधिपाः। ते ज्ञानेच्छा-क्रियात्मानो वह्नीन्द्वर्क-स्वरूपिणः। एतत् सार्द्ध-वचनं शारदायामपि—ते रुद्र-ब्रह्म-रमाधिपाः शिव-ब्रह्म-नारायणा यथा-क्रमं ज्ञान-शक्तीच्छा-शक्ति-क्रिया-शक्ति-स्वरूपा इत्यर्थः। अतएवैते वह्नीन्द्वर्क-स्वरूपिणः शब्दस्य सृष्टयन्तर्गता निबोधका अर्द्धेन्दु-विन्दु-रूपाः शक्तेरेवावस्था-विशेषा ज्ञेयाः। एतेन शक्तेरेव सृष्टयादि-कर्तृत्वमिति ध्वनितम्। ननु शब्दार्थ-भावि भुवनं सृजतीन्दु-रूपा यावद् बिभर्ति पुनरर्क-तनुः स्व-शक्त्या। वह्न्यात्मिका हरति तत् सकलं युगान्ते तां शारदां मनसि जातु न विस्मरामीति।

गोरक्ष-संहितायामपि—इच्छा क्रिया तथा ज्ञानं गौरी ब्राह्मी तु वैष्णवी। त्रिधा शक्तिः स्थिता यत्र तत्परं ज्योतिरोमिति। यथा-सम्भवमुन्नेयं अत्र ज्ञानं गौरी-शक्तिरिच्छा ब्राह्मी-शक्तिः क्रिया वैष्णवी-शक्तिरिति त्रिधा त्रि-प्रकारा सा। वक्ष्यमाणायामपि तस्यां सूर्येन्दु-पावकान्। प्रणवस्य त्रिभिर्वर्णैरित्यादि-प्रणवांशाः अकारोकार-मकारा ब्रह्म-विष्णु-रुद्रात्मका अकाराद् ब्रह्मणोत्पन्नमित्यादि ब्रह्म-विष्ण्वीश्वरास्तत्तन्मण्डलेषु व्यवस्थिता इति। तेन तत्र तत्र सूर्य-रूपोऽकारो ब्रह्मा अत्र तु सूर्य-रूपो विष्णुरिति पूर्वापर-लिखनानुसारेण विरोध इति चेदर्थ-सृष्टयनुसारेण क्रमोऽनुसन्धेयो न तु लिखनानुसारेणेति स्थितम्।

योगिनी-तन्त्रे पूर्व-खण्डे दशम-पटले तु—इत्युक्त्वा सा महा-काली ददावस्मासु शाम्भवि! इच्छा-क्रिया-ज्ञान-शक्तिः सर्व-कार्यार्थ-साधना।

इच्छा तु विष्णवे दत्ता क्रिया-शक्तिस्तु ब्रह्मणे। मह्यं दत्ता ज्ञान-शक्तिः सर्व-शक्ति-स्वरूपिणी। इत्यनेन विष्णोरिच्छा-शक्तिरिति यदुक्तं तदाम्नाय-भेदेनाविरुद्धम्। एवं वक्ष्यमाण-पञ्चाम्नाय-षडाम्नाय-तत्तदाम्नाय-रूपादि-निरूपक-प्रभृति-परस्पर-विरुद्ध-वचनानि सात्विकादि-भेदेनाम्नाय-भेदेन वा व्यवस्थेयानीति निबोधिकादि-सृष्टि-कथनम्।

## २२ तत्र ब्रह्म-विष्णु-शिवाद्युत्पत्तिः

निर्वाण-तन्त्रे प्रथम-पटले तु—सत्य-लोके निराकारा महा-ज्योतिः-स्वरूपिणी। माया-वल्कलमुत्सृज्य द्विधा भिन्ना जगन्मयी। शिव-शक्ति-विभागेन जायते सृष्टि-कल्पना। प्रथमे जायते पुत्रो ब्रह्म-संज्ञो हि पार्वति! कालिकोवाच—'शृणु पुत्र! महा-वीर! विवाहं कुरु यत्नतः'। एतत् श्रुत्वा ततो ब्रह्मा उवाच सादरं वचः---'त्वां बिना जननी नास्ति शक्तिं मे देहि सुन्दरि!' तत् श्रुत्वा जगतां माता स्व-देहात् मोहिनीं ददौ। द्वितीया सा महा-विद्या सावित्री परमा कला। 'अस्याः संगं समासाद्य वेद-विस्तारणं कुरु। अनायासे सृष्टि-कर्त्ता भव त्वं मही-मण्डले।' द्वितीये जायते पुत्रो विष्णुः सत्व-गुणाश्रयः। कालिकोवाच—'शृणु पुत्र! महावीर! विवाहं कुरु यत्नतः।' विष्णुरुवाच—'तव दर्शन-मात्रेण निष्कामी जायते पुमान्। कथं करोमि हे मातर्मोहिनीं देहि मे शिवे!' देहाच्छक्तिं विनिष्कृष्य ददौ तस्मै च कालिका। वैष्णवीं तां महा-विद्यां श्रीविद्यां परमेश्वरि! तामाश्रित्य महा-विष्णुः पालयत्यखिलं जगत्। तृतीये जायते पुत्रो महा-योगी सदा-शिवः। तं दृष्ट्वा सा महा-काली ऋतु-युक्ताभवन्मुदा। 'शृणु पुत्र! महा-योगिन्! मद्-वाक्यं हृदयं कुरु। त्वां विना पुरुषः को वा मां विना कापि मोहिनी। अतस्त्वं परमानन्दो विवाहं कुरु मे शिव!' सदा-शिव उवाच —'यदुक्तं कर्म हे मातस्त्वां विना नास्ति मोहिनी। सत्यमेतत् जगन्मातर्मां विना पुरुषो न च। अस्मिन् देहे संस्थिते च न करोमि विवाह-कर्म्। कुरु देहान्तरं मातः! करुणा यदि वर्तते।' तत्क्षणे सा महा-काली ददौ भुवन-सुन्दरीमिति॥

## २३ शक्त्या सृष्ट्यादि-कथनम्

कुब्जिका-तन्त्रे प्रथम-पटले—ब्रह्माणी कुरुते सृष्टिं न तु ब्रह्मा कदाचन। अतएव महेशानि! ब्रह्मा प्रेतो न संशयः। वैष्णवी कुरुते रक्षां न तु विष्णुः कदाचन। अतएव महेशानि! विष्णुः प्रेतो न संशयः। रुद्राणी कुरुते ग्रासं न तु रुद्रः कदाचन। अतएव महेशानि! रुद्रः प्रेतो न संशयः। ब्रह्म-विष्णु-महेशाद्या जडाश्चैव प्रकीर्तिताः। प्रकृतिं च विना देवि! सर्व-कार्याक्षमा ध्रुव-मित्युक्तम्। इति शक्त्या सृष्ट्यादि-कथनम्॥

## २४ शब्द-ब्रह्मोत्पत्ति-कथनम्

शब्द-ब्रह्मण उत्पत्तिमाह । शारदायां प्रथम-पटले—भिद्यमानात् पराद् विन्दोरव्यक्तात्मा वरोऽभवत् । शब्द-ब्रह्मेति तं प्राहुः सर्वागम-विशारदा इति । पराद् विन्दोरित्यनेन शक्त्यवस्था-रूपो यः प्रथमो विन्दुस्तस्माद् भिद्यमानादव्यक्तात्मा वर्णादि-विशेष-रहितोऽखण्डो नाद-मात्रमुत्पन्नमित्यर्थः। उक्तं च दुर्गेण यत्र ध्वनावकारादयो वर्णा विशेष-रूपेण न व्यज्यन्ते स ध्वनिरव्यक्त इति। सृष्ट्युन्मुख-परम-शिव-प्रथमोल्लास-मात्रमखण्डोऽव्यक्तो नाद-विन्दु-मय एव व्यापको ब्रह्मात्मकः शब्दः। शब्द-ब्रह्मेति हृदयं तथा च राघव-भट्ट-धृतं वचनम्—क्रिया-शक्ति-प्रधानायाः शब्द-शब्दार्थ-कारणम् । प्रकृते-र्विन्दु-रूपिण्याः शब्द-ब्रह्माभवत् परमिति ।

प्रयोग-सारेऽपि—सोऽन्तरात्मा तदा देवि ! नादात्मा नदते स्वयम्। यथा संस्थान-भेदेन सम्भूय वर्णतां गतः। वायुना प्रेर्यमाणासौ पिण्डाद् व्यक्ति प्रयास्यतीति ।

शारदातिलके—चैतन्यं सर्व-भूतानां शब्द-ब्रह्मेति मे मतम्। तत् प्राप्य कुण्डली-रूपं प्राणिनां देह-मध्यगम्। वर्णात्मनाविर्भवति गद्य-पद्यादि-भेदतः। तद्-भिद्यमान-विन्दु-रूपं चैतन्यं कुण्डली-स्वरूपं प्रणवाकारं प्राणिनां देह-मध्यगं सत् वर्णात्मना आविर्भवति प्रकाशत इत्यन्वयः। किं कृत्वा प्राप्य कण्ठादि-करणानीति शेषः। तथा च मूलाधारात् प्रथममुदितो यस्तु तारः पराख्य इत्यादि प्रपञ्चसारे आश्चर्यो वक्ष्यति। अतएव वक्ष्यमाणा सृष्टिः कुण्डलीत इति ज्ञेयम् ॥

## २५ तत्र ब्रह्मणो द्वैविध्य-कथनम्

शब्द-ब्रह्म-परम-ब्रह्म-भेदेन ब्रह्मणो द्वैविध्यमुक्तं कुलार्णवे पञ्चम-खण्डे प्रथमोल्लासे—आगमोत्थं विवेकोत्थं द्विधा ज्ञानं प्रचक्षते। शब्द-ब्रह्मागममयं परं ब्रह्म विवेकजम्। श्रीभागवते षष्ठ-स्कन्धे षोडशाध्यायेऽपि—अहं सर्वाणि भूतानि भूतात्मा भूत-भावनः। शब्द-ब्रह्म परं ब्रह्म ममोभे शाश्वती तनु-रिति। शब्द-ब्रह्म प्रणव-रूपं तथा च भगवद्-गीता—ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्। यः प्रयाति त्यजन् देहं स याति परमां गतिमिति।

ओमिति ध्वनि-मात्रोपलक्षणमतो वक्ष्यमाण-गुरु-वक्त्रे स्थितं ब्रह्म लभ्यते। तत्-प्रसादत इत्यादि वचनैः सह न विरोधः। सर्वत्रैव ध्वनेर्विद्यमा-नत्वात्। प्रणवार्थो वा वाच्यं तु परमं ब्रह्म-प्रणवो वाचकः स्मृत इत्यादि-वचनात्।

॥ इति श्रीप्राण-तोषिण्यां प्रथम-काण्डे वीज-स्वरूप-शब्द-प्रादुर्भाव-रूपाकर-कथनं नाम प्रथमः परिच्छेदः ॥

# द्वितीयः परिच्छेदः

## शब्दार्थ-स्वरूप-ब्रह्म-कथनम्, गर्भाक्षर-जात-जगत्-कथनम्

### १ शब्दादीनां स्फोट-वादः

इत्याकरे समुद्भूते शब्दे संशय-रूपतः विवाद-विलमुत्पन्नं परस्पर-जिगीषयेति। अथ शब्दा नित्या अनित्याः प्रसिद्धाश्चेति मत-त्रयम्। तत्र पूर्व-मते शब्द-ब्रह्मेति सुष्ठूक्तम्। अनित्य-वादिनोऽपि बहवस्तेषां मध्ये आन्तर-स्फोट-वादिनो जाति-व्यक्ति-स्फोटात्मक-बाह्य-स्फोट-वादिनश्चैवं विवदन्ते यथा—अथ कथमर्थः शब्देन प्रतिपाद्यते प्रतिपादयितुमक्षमत्वात्। तथा हि नियत-वर्णाः पदार्थं गमयन्ति ते किं क्रमेण युगपद् वा। नाद्यः। गौरित्यादौ गादि-वर्णैः प्रत्येकमर्थ-प्रतिपादने कृते अपर-वर्ण-वैयर्थ्यं स्यात्। अथ वर्णैरेकशः कियानर्थावयवाः प्रतिपाद्यत इति चेत् तदप्ययुक्तम्। न हि गवाद्यवयवे गादि-वर्णानां संकेतोऽस्ति। न द्वितीयः। भिन्न-कालोपलब्धानां यौगपद्याभावात्। उच्चरित-प्रध्वंसिनो हि वर्णास्तावत् कालमवतिष्ठन्ते। न च पूर्व-पूर्व-वर्ण-ज्ञानं तस्योत्तरोत्तर-वर्ण-ज्ञानानुवृत्तौ नित्यत्वे प्रसङ्गात् अतएवेदं निरस्तम्।

यावन्तो यादृशा ये च तदर्थ-प्रतिपादने। वर्णाः प्रज्ञात-सामर्थ्याः ते तथैवार्थ-बोधका इति। तस्मादनुत्पन्नोत्पन्न-नष्टयोरसत्त्वे विशेषाभावात् वर्णेभ्योऽर्थ-प्रत्ययो न सम्भवतीति वर्णव्यतिरेकेण वर्णाभिव्यङ्ग्यः स्फोटः परिकल्प्यते। स्फुटत्यर्थो यस्मादिति स्फोटोऽपादानेऽल्। वर्णोच्चारणं तु स्फोटार्थमेव। पाद-वर्णा हि स्फोट-व्यञ्जका इति क्रम-यौगपद्याभ्यां व्यञ्ज-कासम्भव इति चेद् भवति तावदर्थ-प्रतिपत्तिः तदनुपपत्त्या वर्णेष्वपि स्फोटः कल्प्यते। तस्मात् वर्ण-स्फोटात् पद-स्फोटस्तस्मादर्थ-प्रतिपत्तिरित्थं च क्रम-यौगपद्याभ्यां पदेभ्यो वाक्यार्थानुपपत्त्या पद-स्फोट-व्यञ्जितात् वाक्य-स्फोटात् वाक्यार्थ-प्रतीतिः।

ननु गौरित्युच्चारणानन्तरं वर्ण-व्यतिरिक्तं परं किञ्चिन्नोपलभामहे। केवलं वर्णा एव प्रतिपाद्यन्ते। तस्मादनुपलभ्यमानत्वात् स्फोट-रूपं नाम नास्त्येव शश-विषाणादि-वदिति स्फोट-वादिनामाक्षिपन्ति। शपथैरपि नादेयं

वदा वः स्फोट-वादिनाम् । नभः-कुसुममस्तीति कोऽभिदध्यात् सचेतन इति । तत्र स्फोट-वादिभिरुच्यते प्रत्यक्षेण न गृह्यते स्फोटः । तथा हि गौरित्यत्र गकारौकार-विसर्गेति वर्ण-त्रयस्य क्रमेणानुभवानन्तरं पदमिति अभिन्नाकारा बुद्धिरुपजायते । न च तस्यां वर्ण-त्रयानर्थक्यं प्रयुज्यते अभिन्न-त्वात् बुद्धेः । यथा पट-बुद्धिरभिन्ना तन्तुभिरेवोप-जायमाना तन्तु-व्यतिरिक्तं पटमवलम्बते । तथा इहापि वर्ण-त्रय-व्यतिरिक्तं वस्त्वन्तरमवलम्बते स च स्फोट इति ।

ननु वर्ण-व्यतिरिक्तमन्यद् वस्तु न दृश्यत एव पटोऽपि तर्हि तन्तु-व्यति-रिक्तो न दृश्यते कथमङ्गी-कर्तव्यः पट-बुद्धौ पटः प्रकाशते स्फोटोऽपि तर्हि तथा । अथ स्फोटः किं स्वरूप इदं तदिति शृङ्ग-ग्राहितया प्रतिपाद्यताम् । अथोच्यते—यो हि यद्-बुद्धि-ग्राह्यः स तद्-बुद्धि-बोध्य एव न बुद्ध्यन्तरेभ्य इति पटोऽपि तर्हि तट-बुद्ध्यैव प्रतिपाद्यते । न तु बुद्ध्यन्तरेण तस्मात् । यथा तन्त्वनुभवानन्तरमवयवी प्रत्यक्ष-सिद्धः पटस्तद्-वत् सकल-वर्णानुभवानन्तर-मनुभूयमानो वर्णाभिव्यङ्ग्यः । प्रत्यक्ष-सिद्ध-स्फोट इति गोपीनाथ-तर्का-चार्याः । तन्मत-द्वयं दूषयितुमपक्रमन्ते शारदातिलके प्रथम-पटले आचार्याः—

शब्द-ब्रह्मेति शब्दार्थं शब्दमित्यपरे विदुः । एके आचार्याः शब्दार्थं आन्तर-स्फोटं शब्द-ब्रह्मेत्याहुः । यथाह—निरंश एव अभिन्नो नित्य-बोध-स्वभावः शब्दार्थं आन्तर-स्फोट इति । अपरे वैयाकरणाः पूर्व-पूर्व-वर्णोच्चा-रणाभिव्यक्त-तत्तत्पद-संस्कार-सहाय-चरम-पद-ग्रहणोद्बुद्धं वाक्य-स्फोट-लक्षणमखण्डैकार्थ-प्रकाशकं शब्दं शब्द-ब्रह्मेति वदन्ति । यथाह—एक एव नित्योऽभिव्यंगेभ्योऽखण्डो व्यक्ति-स्फोटो जाति-स्फोटो वा वहो-रूप इति । न तु अनित्यः शब्दश्चेत् तदा नाना-मुनिभिर्महा-देवेन देव्यर्चना-नाना-शास्त्रेषु एकमेव वचनं क्वचित् क्वचित् कथमुक्तं तदग्रे व्यक्तो-भविष्यति । नित्य-पक्षे तु नैष दोषो वचनस्यापि नित्यत्वात् इति चेत् न । अनित्य-पक्षेऽपि नाना-वक्त्रादेक-स्वरूपा भारती वचन-रूपेण निर्गतेत्यनेन कस्यापराधस्तस्याः शक्तेः वैचित्र्यात् ।

यत्तु योगिनी-तन्त्रे प्रथम-खण्डे दशम-पटले—तन्मध्ये तु मया दृष्टं वर्ण-पुञ्जं महोज्ज्वलम् । सूर्य-कोटि-समाभासं चन्द्र-कोटि-सुशीतलम् । वह्नि-कोटि-महोज्ज्वालं परं ब्रह्म-मयं ध्रुवमिति वचनं तद्-ब्रह्माण्डादि-वदाद्या-शरीरस्थ-

त्वेन अवधातव्यमन्यथा बच्छरीर-वर्तिनां ब्रह्माण्डादीनामपि नित्यं स्यात्। तच्छरीरे ब्रह्माण्डं तु। अतीव-बृहदाकार-ब्रह्माण्ड-कोटि-कोटयः। चरन्ति सर्वदा देवि! कः संख्यातुं क्षमो भवेत्। इति तदनन्तर शिव-वचनाज्-ज्ञेयम्। अथ भवन्मते मन्त्र-वेद-गायत्र्यादीनामनित्यत्वापत्तिरिष्टापत्तिरिति चेत्।

ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्—इति गीतोक्तम्। गुरु-वक्त्रे स्थितं ब्रह्म लभ्यते तत्प्रसादतः—इति गुरु-गीतोक्तम्। गुरुणा यस्य यत् प्रोक्तं तत्-तस्य ब्रह्म-संज्ञितम्—इति गुप्त-साधन-तन्त्रे षष्ठ-पटलोक्तम्। गायत्री ब्रह्म-रूपिणीति तत्-कवचोक्तमपौरुषेयाणि वेद-वाक्यानीति दुर्ग-सिंहोक्तं च। उक्तं च दोषाः सन्ति न सन्तीति पौरुषेयेषु विद्यते। वेदे कर्तुर-भावात्तु दोषाशंकैव नास्ति नः। इति तत्र तत्र लक्षणया ब्रह्म-प्रतिपादकमिति व्याख्यातव्यमिति चेन्नेयं लक्षणा रूढ़ि-प्रयोजनाभ्यां वञ्चितत्वादिति।

उक्तं च काव्य-प्रकाशे—मुख्यार्थ-बाधे तद्-योगे रूढ़ितोऽर्थ-प्रयोजनात्। अन्यार्थो लक्ष्यते यत् सा लक्षणारोपिता क्रिया। इति शब्द-श्रवण-मात्रावग-म्योऽर्थः मुख्यार्थः। यथोक्तं गोपीनाथ-तर्काचार्येण—श्रुति-मात्रेण यत्रास्य तादर्थ्यमवसीयते। तं मुख्यमर्थं मन्यन्ते गौणं यत्नोपपादितमिति। बाधस्तु अन्वयानुपपत्तिः। ययेत्यर्थे यदित्यव्ययम्। क्रिया-व्यापारः। आरोपिता अभिधेय-प्रत्ययान्तरित-प्रत्ययेति। प्रसिद्ध-वादिनस्तु नामी वर्णा नित्यास्त-ल्लक्षणा-योगात्। तथा हि सदकारणवन्नित्यमिति नित्य-लक्षणम्। सत् सत्वाशालि अकारण-वत् कारण-रहितं यत् तन्नित्यमित्यर्थः। केवलं सदि-त्युक्ते घट-पटादेर्ध्वंसस्यापि नित्यत्व-प्रसङ्गः स्यात्। केवलमकारण-वदि-त्युक्तेऽपि प्रागभावस्यापि नित्यत्व-प्रसङ्गः। अतो विशेषण-द्वयमिति।

वर्णास्तु कण्ठ-ताल्वादि-करण-क्रमानुविधायि-जन्मानः नित्या भवितु-मर्हन्ति। नाप्यनित्याः स एवायं शब्दो यः पूर्वमुपालब्ध इति प्रत्यभिज्ञानात्। अथ तत्-प्रतिरूपकोऽयमिति चेत् तथापि संकेतान्तर-प्रसक्तिः स्यात्। संकेत-स्तु। अस्माच्छब्दादयमर्थो बोद्धव्य इत्युद्देशन-रूपः। वर्णादिषु उच्चरित-प्रध्वस्तेषु संकेतोऽपि ध्वस्त इति। तस्मान्न अमी वर्णा नित्या नाप्यनित्याः। किन्तु अनवच्छिन्न-सन्तानाः प्रसिद्धा इति। ननु वर्णा नित्याश्चेत् तदा कथ-मुक्तं वर्णात्मनाविर्भवतीति। नैवमभिप्रायापरिज्ञानाद् दोषमाशङ्कसे तथा हि।

शब्दो द्विविधो ध्वनिर्वर्णश्च । षड्जर्षभ-गान्धार-मध्य-पञ्चम-धैवत-निषादेषु सप्तसु स्वरेषु वर्णं विना ध्वनिः स्वातन्त्र्येण प्रतिभाति । अमरसिंहेनापि तन्त्री-कण्ठोत्थिताः स्वरा इत्युक्तम् । तथा च षड्जं रौति मयूरस्तु गावो नर्दन्ति चर्षभम् । अजो रौति तु गान्धारं क्रौञ्चं क्वणति मध्यमम् । पुष्प-साधारणे काले कोकिलो रौति पञ्चमम् । धैवतं कुञ्जरो रौति निषादं हेषते हय इति राय-मुकुट-प्रभृति-धृत-सङ्गीत-वचनमिति । मालवादयो रागा अपि मूर्छित-स्वर-भेदेन ध्वनिरेव भवति । तथा च मालवोऽयं वसन्तश्चायमित्यादि गीति-श्रवण-समये ध्वनि-भेदेन सामाजिकानां प्रतीतिः स्यात् । ध्वनि-भेद-ज्ञानं तु स्वर-भेदेन भवति । न तु वस्तुत इति । ध्वनिमन्तरेण वर्णो न प्रकाशते । अर्थावबोधाय ध्वनिर्वर्णात्मना आविर्भवति प्रकाशत इति तस्य तात्पर्यम् । नन्वर्थावबोधाय परा पश्यन्ती मध्यमा वैखरीत्व-रूपावस्थाः सन् ध्वनिरपि प्रकाशते । तथा च गवादीनां वत्स-प्रभृत्या-वाहनाद्यर्थं नादः प्रवर्तते ।

अतएवोक्तं स्वर-शास्त्रे—शिशुर्वेत्ति पशुर्वेत्ति वेत्ति गीति-रसं फणी । हरिर्वेत्ति हरो वेत्ति नारदो वेत्ति वा न वा । इति चेत् सत्यम् । गवादीनां स्वर-मात्र-प्रतीति-समवायिनां कियद्-विषयक-ज्ञानमस्ति न तु धी-मेधा-विज्ञानानि तानि तु वर्ण-ज्ञानादृते न सम्भवन्ति । तथा हि ईश्वर-विषयक-ज्ञानमपीश्वर-शब्दं विना न भवति । एवमनिर्देश्यं निर्गुणं ब्रह्मापि अन्धकाराव-स्थित-वस्तु-प्रकाशक-प्रदीपेनेव तत्-प्रकाशक-मात्रेण निर्गुण-शब्देनैव व्यज्यते । अतएव ध्वनिं तृणाय मत्वा शिशुर्वेत्ति पशुर्वेत्ति वेत्ति गीति-रसं फणी । एवं तु कविता-तत्त्वमीश्वरो वेत्ति नापर इत्यनेन काव्य-विद्भिरुपहसितम् । कविता तु अर्थ-व्यङ्ग्या अतो वर्णात्मक-शब्देनैव कविता स्यादिति तु न शब्द-वाच्यत्वं निर्गुणस्य ।

स निर्गुणः गुणश्चेति शिवो ज्ञेयः सनातनः । निर्गुणः प्रकृतेरन्यः सगुणः सकलः स्मृत इति शारदातिलकेऽर्गानां प्रकृति-प्रभवत्वेन तत्र वृत्त्याभावात् प्रकृतेरन्यः प्रकृत्या असम्बद्ध इत्यर्थः । कुब्जिका-तन्त्रे प्रथम-पटले तु शेषार्द्ध-मन्यथोक्तं यथा—निर्गुणः सगुणश्चेति शिवो ज्ञेयः सनातनः । निर्गुणाश्चैव सञ्जाता त्रिबिन्दवस्तत्र एव च । ब्रह्म-बिन्दुर्विष्णु-बिन्दू रुद्र-बिन्दुर्महेश्वरीति ।

अन्यथा प्रकृतीश्वर-भेदोपलब्ध्यनन्तरं मिलितत्व-प्रतीति-विषयेण सगुणेन निर्गुणस्य भेद-प्रतीतिर्न स्यादत एव श्रुत्यध्याये ब्रह्मणा ब्रह्मण्यनिर्देश्ये

स्वाहा—चन्द्र-युग्मं शिवो वेद-माता ज्वलन-सुन्दरी। स्वाहा परा देव-भोज्यं ठ-द्वयं चन्द्र-युग्मकम्। ध्रुवो हविर्वेद-माता देवास्यं वह्नि-सुन्दरी।

हूँ—शिखा वषट् शिरो-मध्यं शक्र-माता हर-प्रिया। शिखा वषट् च। वषट् कवचं क्रोधो वर्म हुमित्यपि। क्रोधाख्यो हं तनुत्वं च शस्त्रादौ रिपु-संज्ञकः।

वौषट्—अस्त्र-नेत्र-युगं वौषट्।

फट्—फडस्त्रं शस्त्रमायुधम्।

हसौः—तार्तीयं तु हसौः प्रेत-वीजम्।

हंसः—हंसोऽजपा-मनुः।

गं—गकारो विन्दु-मान् विघ्न-वीजं गणेश-वीजकम्।

लं—स्मृतिस्थं मांसमौ विन्दु-युतम्। भू-वीजमीरितम्।

ड्रीं—ठान्तं दहन-नेत्रेन्दु-युतं तु विम्ब-वीजकम्।

नादः—अथ काम-कला वाम-नयनं विन्दु-संयुतम्। अर्क-मात्रा कला-वाणी नादोऽर्द्धेन्दुः सदाशिवः। अनुच्चार्यं तुरीया च विश्व-मातृ-कला परा।

भूत-डामर-संकेत-बोधार्थं भूत-डामरीय-वीज-नामान्यपि लिख्यन्ते—

ॐ—प्रणवो विष-वीजं स्याद् ध्रुवं हालाहलं स्मृतम्। काल-श्रुति-पथं ज्ञेयं बहु-रूपि निरञ्जनम्।

ह्रीं—क्षतजस्थं व्योम-वक्त्रं धूम्र-भैरव्यलंकृतम्। नाद-विन्दु-समायुक्तं वीजं प्राणात्मिकं स्मृतम्।

क्रीं—क्रोधीशं क्षतमारूढं धूम्र-भैरव्यलंकृतम्। विद्युज्जिह्वा-विन्दु-युतं पितृ-भू-वासिनो स्मृतम्।

ऐं—क्रोध-कालात्मकं कुर्याद् भौतिकं वाग्भवं स्मृतम्। नाद-विन्दु-समायुक्तं समाधायोग्र-भैरवीम्। वीजमेतत् तु कथितं शुद्ध-बुद्धि-प्रवर्तकम्।

क्लीं—क्रोधीशं बल-भृद् धूम्र-भैरवी नाद-विन्दुभिः। त्रिमूर्ति-मन्मथं कामराजस्त्रैलोक्य-मोहनम्। इन्द्रासन-गतो ब्रह्म-समूर्तिस्तु स-मन्मथः।

ह्लीं—संयुक्तं धूम्र-भैरव्या रक्तस्थं बलि-भोजनम्। नाद-विन्दु-समायुक्तं किंकिणी-वीजमुत्तमम्।

ह्लां—नाद-विन्दु-समायुक्तं रक्तस्थं बलि-भोजनम्। काल-रात्र्यासनो-पेतं विशिखाख्यं महा-मनुम्।

हुं—विदार्यालिङ्गितोंग्रास्यो वसिस्तु क्षमजोक्षितः । नाद-विन्दु-समायुक्तो विज्ञेयः पिशितासनः ।

स्फें—धूम्र-ध्वजाधः कालाग्निः सोर्द्ध-केशीन्दु-विन्दुभिः । युगान्त-कारकं वीजं भैरवेण प्रकाशितम् ।

प्रीं—कपर्दिनं समादाय क्षतजो क्षित-विग्रहम् । संयुक्तं धूम्र-भैरव्यां क्षोऽयं नाद-विन्दु-मान् ।

ठं ठं ठं ठः—कपाली-द्वयमादाय महा-कालेन मण्डितम् । समासन-मिति प्रोक्तं चण्डिकाढ्यं प्रयोजयेत् ।

ह्लं ह्लं—क्षतजस्थं व्योम-वक्त्रं चन्द्र-खण्ड-विभूषितम् । खद्योतमिति सम्प्रोक्तं ग्रासिनी काल-रात्रि-युक् ।

ह्लाँ—क्षतजोक्षितमाकाशं नाद-विन्दु-विभूषितम् । विदारी-भूषितं चैव वीजं वैवस्वतो दृकम् ।

ॐ—कीर्त्याख्या काल-वक्त्रा च महा-कालेन साधितम् तदनादि-पञ्च-रश्मिः सृष्टि-स्थित्यन्त-कृद्-विधिः ।

हूँ—व्योमस्थं ताल-जङ्घास्थं विन्दु-नाद-विभूषितम् । कूर्चं कालो महा-कालः क्रोध-वीजं निरञ्जनम् ।

पृथ्वी-पालो नव-द्वीप-पति-रति-मतिः कृष्ण-चन्द्रो महात्मा । विद्या-ब्राह्मण्य-मान्यं यमजनयदमुं दान्तमीशान-चन्द्रम् । तस्मात् सत्स्वाप यो विश्व-विजयि-पदवीं स्वेष्ट-देवी-प्रसादाच्चक्रे तेनाद्यमेतद् विदभिमत-फलं सर्ग-काण्डं विचित्रम् । हंसः प्राणो मनश्चन्द्रः कृष्णो मध्यं गतस्तयोः । गौड़ोदये पुष्पवन्तौ श्रीप्राण-कृष्ण-चन्द्रकौ । अन्नदा-मङ्गलं देश-भाषयाची-करोद् यतः । तस्माद् विदेशेऽमावास्या कृष्ण-चन्द्रस्य भू-पतेः । एषा निर्जर-भाषया समुदिता भास्वत्-प्रभा निर्मला । विश्वोद्दीप्ति-करी जगद्-दिन-करी श्रीप्राण-तोषिण्यतः । श्रीमान् नीवृति नीवृति क्षिति-तलेऽभूत् प्राण-कृष्णाभिधो । हंसो नास्तमितः सदोदय-युतः कीर्त्यानया शाश्वतः ।

।। इति श्री प्राणकृष्ण-विश्वासानुमतायां विश्व-विजयि-श्रीरामतोषण-विद्यालंकार-विरचितायां श्रीप्राण-तोषिण्यां फल-कथन-रूप दशम-परिच्छे-दान्वितं सर्ग-काण्डं समाप्तम् ।।

• • •

# प्रथमः परिच्छेदः

## संस्कार-रूप-ग्रन्थि-कथनम्

अचिन्त्यापि ध्येया स्वखिल-हृदये ध्वान्त-रुचिरा मनोध्वान्तं गाढ़ं हरसि करुणाम्भोनिधिरपि। महा-काली स्वैरिण्यसि सकल-मूर्तिः कदहमान-दृश्या लोकानां त्वमसि जयतादद्भुत-तमः ॥ आसीद् वाम-हरेति पूरुष-हरी राकेन्दु-भाजि-त्वरीराशा-पूर्ति-करीः सुशीत-लहरीः कीर्तीः समासादयन्। विश्वासान्वय-पावनी गुरु-कृपा-पात्रं कुलोद्दीपकं यो दैवैर्जनयां बभूव कृतिनं श्रीप्राण-कृष्णाभिधम् ॥ कृष्ण-मङ्गल-विद्या-वागीश-सूनुः सतां मुदे, गङ्गा-देवी-सुतोऽकार्षीद् धर्म-काण्डं द्वितीयकम्। द्वितीयस्योच्यते धर्म-काण्डस्य संस्क्रियात्मनः, निर्घण्टः प्रथमं तत्र संस्कारस्य प्रशंसनम् ॥ द्विजानां दश संस्काराः कर्म-मात्राधिकारकाः, शूद्र-शूद्र-प्रकाराणां विज्ञातव्या नवैव ते। मायादिकत्वं मन्त्राणां विज्ञेयं कलि-सम्मतम्, ऋतु-कर्म ततो गर्भाधानं पुंसवनं ततः। पञ्चामृत-प्रदानं च सीमन्तोन्नयनं तथा, जात-कर्म ततो मेधा-जननं कविता-करम्। मायादि-दानं विप्रेभ्यो बालस्य पुष्टि-कारणम्, विज्ञेयं नामकरणं ततो निष्क्रमणं स्मृतम्। अन्नाशनं ततश्चूड़ा-कर्ण-वेधस्ततः परम्, कुमारी-शूद्र-जातीनां सर्वमेतदमन्त्रकम्। उपनायो वेद-भेदे सूत्र-माणं प्रकीर्तितम्। सूत्र-निर्माण-संस्कारौ सूत्राधिष्ठातृ-देवता। सावित्री-ग्रहणं कर्म समावर्त्तनमित्यपि। अदार-जन-निन्दा च धर्म-पत्नी-निरूपणम्। विवाहो दश-संस्कार-प्रयोगस्तदनन्तरम्। इति द्वितीय-काण्डाद्य-परिच्छेद-समापनम्।

आदौ गुरोर्लक्षणं च ततः सद्गुरु-लक्षणम्। कौल-गुरु-प्रशंसा च कूटार्थ-कृति-दूषणम्। गुरु-विशेष-कथनं शास्त्रे त्वावश्यकं गुरोः। गुरु-मन्त्र-देवतानामेकत्व-भावना-क्रमः। गुरु-सन्तुष्टचादि-फलं गुरूच्चारणजं फलम्। गुरु-तृप्ते जगत्-तृप्तिराधिक्यं सर्वतो गुरोः। जगत्-पूजा-फलावाप्तिर्गुरु-पादाम्बुजेऽर्चिते। दीक्षा-शिक्षादि-भेदेन गुरु-भेद-निरूपणम्। एक एव महाकालो गुरुर्न मानुषः क्वचित्। तदधिष्ठान-वशतो माहात्म्यं मानुषस्य च। गुरु-वंशस्य मर्यादा पशु-मन्त्रादि-भेदतः। परापरादि-भेदश्च गुरूणां तदनन्तरम्। स्त्री-गुरोर्लक्षणं वर्ज्यं गुरुत्व-कल्पने तथा।

त्याज्यो गुरुश्च शिष्यस्य लक्षणं वर्जनं तथा। वर्ज्या शिष्य-कर्तृ-निन्दा गुर्वाज्ञा-लङ्घने तथा। गुरु-द्रव्यादि-हरण-दोषानिष्ट-कृतेस्तथा। गुरु-शाप-जन्य-दोषस्तन्निन्दा-श्रवणस्य च। तच्छ्रवण-प्रतीकारो गुरु-निन्दाकरस्य च। दोषो गुरौ मनुष्यत्व-ज्ञान-निन्दा तथैव च। गुरु-द्रोहादि-दोषश्च त्यागे गुरु-कुलस्य च। निषेधो गुरु-गोत्रस्य माननापूजने तथा। गुरु-दर्शन-कालस्य पूज्यत्वं गुरु-पूजनम्। विनेष्ट-पूजा-दोषश्च गुरु-पूजादिजं फलम्। गुरु-गेह-स्थित-कृत्य-पुण्यस्याक्षयता तथा। गुरु-पाद-पद्म-रेणूदक-माहात्म्य-वर्णनम्। गुर्वन्न-भक्षण-फलं गुरूच्छिष्ट-फलं तथा। तदुच्छिष्टाभोजनज-दोषश्च तदनन्तरम्। गुरु-पादुकादि-प्रणतिर्निषिद्धं गुरु-सन्निधौ। गुर्वाज्ञया निषिद्धस्याचरणान्नास्ति पातकम्। जाति-विद्यादि-गर्वस्य त्यागः श्रीगुरु-सन्निधौ। सदा श्रीगुरु-पादाब्ज-ध्यानस्य फल-निर्णयः। गुरुणंकासन-त्यागो गुरु-भक्ति-फलं तथा। पैत्र-गुरु-कुल-त्याग-दोषः श्रीपूर्व-कीर्त्तनम्। गुर्वादेरर्चना-काल एवं तन्नाम-भाषणम्। चतुर्विधा तु शुश्रूषा गुरु-मित्रादि-मानना। गुर्वालये प्रवेशस्य प्रकारस्तदनन्तरम्। इति द्वितीय-काण्डस्य परिच्छेदे द्वितीयकः।

नाड़ी-चक्र-विचारश्च भू-परीक्षा ततः परम्। दिग्-विशेष-प्लवा भद्रा भद्र-फल-प्रदायिनी। ब्रह्मण्यादि-मही-ज्ञानं शुभ-भूमि-निरूपणम्। त्याज्या भूम्यो हि चक्रं च तस्य व्याख्यानमेव च। शल्योद्धारः स द्विविधः शंकुना दिङ्-निरूपणम्। मण्डप-करणं तस्मात् तोरणं च ततः परम्। अंकुरारोपणं तस्य परीक्षा तदनन्तरम्। अशुभांकुर-शान्तिश्च परिच्छेद-तृतीयके।

दीक्षा-शब्दार्थ-निर्णीतिर्दीक्षा-माहात्म्य-कीर्तनम्। अदीक्षितस्य निन्दा च दीक्षितस्य प्रशंसनम्। दीक्षया चैव ज्येष्ठत्वं दीक्षया मोक्ष-साधनम्। एक-मन्त्र-साधनेन सर्व-मन्त्रस्य साधनम्। मन्त्र-ग्रहण-निन्दा च पुस्तकालोक-नादितः। दीक्षां विना नाधिकारः पूजादौ निन्द्य-दीक्षितः। ततश्च त्रिविधा दीक्षा चतुर्धापि प्रकीर्तिता। अधिवास-विधिश्चांकुरार्पणाद्यधिवासयोः। प्रयोग इति तुर्याख्य परिच्छेद-समापनम्।

गुरोर्निमन्त्रणं पूर्वं स्नानादि-तन्त्र-कर्मणि। सौर-मास-समुल्लेखो मातृकादि-प्रपूजनम्। वृद्धि-श्राद्धं सर्व-कार्ये पञ्च-देव-प्रपूजनम्। लक्ष्म्यादि-पूजनं चैव ग्रह-मन्त्रस्ततः परम्। ग्रह-पूजा-दान-विधिर्ग्रहाणां कवचं ततः।

निधि-ध्यान-मन्त्र-पूजा-कवचं तदनन्तरम् । वर्ण-ध्यानाद्यासनस्य शुद्धिश्चैव ततः परम् । अर्चना-होम-कर्माणि समासेन ततः परम् । इति पञ्चम-विच्छेद-समाप्तिरभिधीयते ।

दीक्षा नाना-विधा षष्ठे कीर्तितान्यद् यथा-स्थलम् । ज्ञातव्यमुद्देश-मात्रं निर्घण्टेन कृतं मया । व्याख्यया ग्रन्थ-बाहुल्य-दर्शनादधुना मया । प्रमाण-मात्रं लिखितं मीमांसापि क्वचित् क्वचित् ।

## गर्भाधानादि-संस्काराः

इदानीं प्राप्तावसरेण गर्भाधानादि-संस्कारा उच्यन्ते । संस्काराणां प्रयोगस्यावश्यम्भावादग्रे प्रयोगो लेखनीयो नातो व्याख्या-जाता प्रमाण-मात्रं लिख्यते । महा-निर्वाण-तन्त्रे नवमोल्लासे सदाशिव उवाच—संस्कारेण विना देवि ! देह-शुद्धिर्न जायते । नासंस्कृतोऽधिकारी स्याद् दैवे पैत्र्ये च कर्मणि । अतो विप्रादिभिर्वर्णैः स्व-स्व-वर्णोक्त-संस्क्रिया । कर्तव्या सर्वथा यत्नैरिहामुत्र हितेप्सुभिः । वीज-सेकः पुंसवनं सीमन्तोन्नयनं तथा । जात-नाम्नो निष्क्रमणमन्नाशनमतः परम् । चूड़ोपनयनोद्वाहाः संस्काराः कथिता दश । शूद्राणां शूद्र-भिन्नानामुपवीतं न विद्यते । शूद्र-भिन्नानां शूद्र-प्रकारा-णामधम-शूद्र-कैवर्त्तादीनामित्यर्थः । तेषां नवैव संस्कारा द्विजातीनां दश स्मृताः ।

नित्यानि सर्व-कर्माणि तथा नैमित्तिकानि च । काम्यान्यपि वरारोहे ! कुर्याच्छाम्भव-वर्त्मना । संस्कारेषु च सर्वेषु तथैवान्येषु कर्मसु । विप्रादि-वर्ण-भेदेन क्रमान्मन्त्राश्च दर्शिताः । सत्य-त्रेता-द्वापरेषु तत्तत्-कर्मसु कालिके ! प्रण-वाद्यांस्तु तान् मन्त्रान् प्रयोगेषु नियोजयेत् । कलौ तु परमेशानि ! तैरेव मनुभिर्नराः । मायाद्यैः सर्व-कर्माणि कुर्युः शङ्कर-शासनात् । निगमागम-तन्त्रेषु वेदेषु संहितासु च । सर्वे मन्त्रा मयैवोक्ताः प्रयोगा युग-भेदतः । अथोच्यते महा-माये ! गर्भाधानादिका क्रिया ।

## तत्रादौ ऋतु-संस्कारः

तत्रादावृतु-संस्कारः कथ्यते क्रमतः शृणु । कृत-नित्य-क्रियः शुद्धः पञ्च देवान् समर्चयेत् । ब्रह्मा दुर्गा गणेशश्च ग्रहा दिक्-पतयस्तथा । स्थण्डि-लेन्द्रादि-दिग्-भागे घटेष्वेतान् प्रपूजयेत् । ततस्तु मातृकाः पूज्या गौर्याद्याः

षोडश क्रमात्। गौरी पद्मा शची मेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा शान्तिः पुष्टिर्धृतिः क्षमा। आत्मनो देवता चैव तथैव कुल-देवता। आयान्तु मातरः सर्वास्त्रिदशानन्द-कारिकाः। विवाह-व्रत-यज्ञानां सर्वाभीष्टं प्रकल्प्यताम्। यान-शक्ति-समारूढाः सौम्य-मूर्ति-धराः सदा। आयान्तु मातरः सर्वा यज्ञोत्सव-समृद्धये। इत्यावाह्य मातृ-गणान् स्व-शक्त्या परिपूज्य च। देहल्यां नाभि-मात्रायां प्रादेश-परिमाणतः। सप्तधा पञ्च वा विन्दून् दद्यात् सिन्दूर-चन्दनैः। प्रत्येक-विन्दौ मतिमान् कामं मायां रमां स्मरन्। घृत-धारामविच्छिन्नां दत्वा तत्र वसुं यजेत्। वसु-धारां प्रकल्प्यैवं मयोक्तेनैव वर्त्मना। विरच्य स्थण्डिलं धीरो वह्नि-स्थापन-पूर्वकम्। होम-द्रव्याणि संस्कृत्य पचेच्चरुमनुत्तमम्। प्राजापत्यश्चरुश्चात्र वायु-नामा हुताशनः। समाप्य धारा-होमान्तं कृत्यमार्त्तवमारभेत्।

'ह्लीं प्रजापतये स्वाहा' चरुणैवाहुति-त्रयम्। प्रदायैवाहुतिं दद्यादिमं मन्त्रमुदीरयन्—'विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु। आसिञ्चतु प्रजा-पतिर्धाता गर्भं दधातु ते। स्वाहा' आज्येन चरुणापि वा। सूर्यं प्रजापतिं विष्णुं ध्यायन्नाहुतिमुत्सृजेत्। 'गर्भं धेहि सिनीवाली गर्भं धेहि सरस्वती। गर्भं ते अश्विनौ देवावाधत्तां पुष्कर-स्रजौ।' ध्यात्वा देवीं सिनीवालीं सरस्वत्यश्विनौ तथा। स्वाहान्त-मनुनानेन दद्यादाहुतिमुत्तमाम्। अतः कामं वधूं मायां रमां कूर्चं समुच्चरन्। 'अमुष्यै पुत्र-कामायै गर्भमाधेहि' स-द्विठम्। उक्त्वा ध्यात्वा रविं विष्णुं जुहुयात् संस्कृतेऽनले। 'यथेयं पृथिवी देवी ह्युत्ताना गर्भमादधे। तथा त्वं गर्भमाधेहि दशमे मासि सूतये। स्वाहा'न्ते-नामुना विष्णुं ध्यायन्नाहुतिमाचरेत्। पुनराज्यं समादाय ध्यात्वा विष्णुं परात्परम्। ज्येष्ठेन रूपेण नार्यामस्यां वरीयसम्। सुतमाधेहि ठ-द्वन्द्वमुक्त्वा वह्नौ हविस्त्यजेत्। कामेन पुटितां मायां मायया पुटितां बधूम्। पुनः कामं च मायां च पठित्वास्याः शिरः स्पृशेत्। पति-पुत्र-वतीभिश्च नारीभिः परिवेष्टितः। शिर आलभ्य हस्ताभ्यां बध्वाः क्रोड़ाञ्चले पतिः। विष्णुं दुर्गां विधिं सूर्यं ध्यात्वा दद्यात् फल-त्रयम्। ततः स्विष्टि-कृतं हुत्वा प्रायश्चित्तं समापयेत्। यद्वा प्रदोष-समये गौरी-शङ्कर-पूजनात्। भास्करार्घ्य-प्रदानाच्च दम्पत्योः शोधनं भवेत्।

गर्भाधान-कथनम्

आर्त्तवं कथितं कर्म गर्भाधानमथो शृणु। तद्-रात्रावन्य-रात्रौ वा युग्मायां निशि भार्यया। सदनाभ्यन्तरं गत्वा ध्यात्वा देवं प्रजा-पतिम्। स्पृशेत् पत्नीं पठेद् भर्त्ता माया-वीज-पुरःसरम्—'आवयोः सुप्रजायै त्वं शय्या-शुभङ्करी भव।' आरुह्य भार्यया शय्यां प्राङ्-मुखो वाप्युदङ्-मुखः। उपविश्य स्त्रियं स्पृशन् हस्तमादाय मस्तके। वामेन पाणिनालिंग्य स्थाने-स्थाने मनुं जपेत्। शीर्षे कामं शतं जप्त्वा चिबुके वाग्भवं शतम्। कण्ठे रमां विंशतिधा स्तन-द्वन्द्वे शतं मतम्। हृदये दशधा मायां नाभौ तां पञ्च-विंशतिम्। जप्त्वा योनौ करं दत्वा कामेन सह वाग्भवम्। शतमष्टोत्तरं जप्त्वा लिङ्गेऽप्येवं समाचरन्। विकास्य मायया योनिं स्त्रियं गच्छेत् सुताप्तये। रेतः-सम्पात-समये ध्यात्वा विश्व-कृतं पतिः। नाभेरधस्तात् चित्-कुण्डे वस्तिकायां प्रपात-येत्। शुक्र-सेकान्तरे विद्वान् इमं मन्त्रमुदीरयेत्—'यथाग्निना सगर्भा भूर्द्यौर्यथा वज्र-धारिणा। वायुना दिग् गर्भवती तथा गर्भवती भव'। इति गर्भाधानम्।

पुंसवन-विधिः

जाते गर्भे ऋतौ तस्मिन्नन्यस्मिन् वा महेश्वरि! तृतीये गर्भ-मासे तु चरेत् पुंसवनं गृही। कृत-नित्य-क्रियो भर्त्ता पञ्च देवान् समर्चयेत्। गौर्यादि-मातृकाश्चैव वसोर्धारां प्रपातयेत्। वृद्धि-श्राद्धं ततः कृत्वा पूर्वोक्त-विधिना सुधीः। धारा-होमान्तमापाद्य कुर्यात् पुंसवन-क्रियाम्। प्राजापत्य-श्चरुस्तत्र चन्द्र-नाम हुताशनः। गव्ये दध्नि यवं चैकं द्वौ माषावपि निक्षिपेत्। पतिः पृच्छेत् स्त्रियं 'भद्रे! किं त्वं पिबसि' त्रिः कृतम्। ततः सीमन्तिनी ब्रूयान्मया पुंसवनं त्रिधा। प्रसृतींस्त्रीन् पिबेन्नारी यव-माष-युतं दधि। जीवत्-सुताभिर्वनितां याग-स्थानं समानयेत्। संस्थाप्य वाम-भागे तां चरु-होमं समाचरेत्। पूर्ववच्चरुमादाय माया कूर्चं समुच्चरन्—'ये गर्भ-विघ्न-कर्त्तारो ये च गर्भ-विनाशकाः। भूताः प्रेताः पिशाचाश्च बेताला बाल-घातकाः। तान् सर्वान् नाशय द्वन्द्वं गर्भ-रक्षां कुरु द्वि-ठः।' मन्त्रेणानेन रक्षोघ्नं चिन्तयित्वा हुताशनम्। रुद्रं प्रजा-पतिं ध्यायन् प्रदद्याद् द्वादशाहुतीः। ततो माया चन्द्रमसे स्वाहेत्याहुति-पञ्चकम्। दत्वा भार्यां हृदि स्पृष्ट्वा मायां लक्ष्मीं शतं जपेत्। ततः स्विष्टि-कृतं हुत्वा प्रायश्चित्तं समापयेत्। इति पुंसवनम्।

### पञ्चामृत-विधिः

ततस्तु पञ्चमे मासि दद्यात् पञ्चामृतं स्त्रियै। शर्करा मधु दुग्ध च घृतं दधि समांशकम्। पञ्चामृतमिदं प्रोक्तं देह-शुद्ध्यै विधीयते। वाग्भवं मदनं लक्ष्मीं मायां कूर्चं पुरन्दरम्। पञ्च-गव्योपरि शिवे! प्रजप्य पञ्च पञ्चधा। एकीकृत्यामृतान्यत्र प्राशयेद् दयितां पतिः। इति पञ्चामृत-दानम्।

### सीमन्तोन्नयन-विधिः

सीमन्तोन्नयनं कुर्यान्मासि षष्ठेऽष्टमेऽपि वा। यावन्न जायतेऽपत्यं तावत् सीमन्तन-क्रिया। पूर्वोक्त-धारा-होमान्तं कर्म कृत्वा स्त्रिया सह। उपविश्यासने प्राज्ञः प्रदद्यादाहुति-त्रयम्। विष्णवे भास्करे धात्रे वह्निजायां समुच्चरन्। ततश्चन्द्रमसं ध्यात्वा शिव-नाम्नि हुताशने। सप्तधा हवनं कुर्यात् सोममुद्दिश्य मानवः। अश्विनौ वासवं विष्णुं शिवं दुर्गां प्रजा-पतिम्। ध्यात्वा प्रत्येकतो दद्यादाहुतीः पञ्चधा शिवे! स्वर्ण-कङ्कतिकां भर्त्ता गृहीत्वा दक्षिणे करे। सीमन्ताद्-बद्ध-केशान्तः केश-पाशे निवेशयेत्। शिवं विष्णुं विधिं ध्यायन् माया-वीजं समुच्चरन् – 'भार्ये! कल्याणि! सुभगे! दशमे मासि सुव्रते! सु-प्रसूता भव प्रीता प्रसादाद् विश्व-कर्मणः। आयुष्मति! कङ्कतिका वर्चस्वी ते शुभं कुरु।' ततः समापयेत् कर्म स्विष्टि-कृद् हवनादिभिः' इति सीमन्तोन्नयनम्।

### जात-कर्म-विधिः

जात-मात्रं सुतं दृष्ट्वा दत्वा स्वर्णं गृहान्तरे। पूर्वोक्त-विधिना धीरो धारा-होमं समापयेत्। ततः पञ्चाहुतीर्दद्यादग्निमिन्द्रं प्रजा-पतिम्। विश्वान् देवांश्च ब्रह्माणमुद्दिश्य तदनन्तरम्। मधु-सर्पिः कांस्य-पात्रे समानीय समांशकम्। वाग्भवं सप्तधा जप्त्वा प्राशयेत् तनयं पिता। दक्ष-हस्तानामिकया मन्त्रमेवं समुच्चरन्—'आयुर्वर्चो बलं मेधा वर्द्धतां ते सदा शिशो!' इत्यायुर्जननं कृत्वा गुप्तं नाम प्रकल्पयेत्।

गन्धर्व-तन्त्रे द्वितीय-पटले—बालकस्य तु जिह्वायां त्रि-दिनाभ्यन्तरे न्यसेत्। मधुना श्वेत-दूर्वाभिः सुवर्णस्य शलाकया। इदं वाग्भव-कूटं तु लिखेद् वै जननान्तरे। स एव पण्डितो भूयान्न तु मूर्खो भवेद् ध्रुवम्।

वाग्भव-कूटमपि तत्रैव यथा—कामदेवस्ततो योनिस्तुर्य-स्वर-पुरन्दरी। भुवनेशी ततः पश्चात् पञ्च-वक्त्र-विभूषितः। अयं स वाग्भवो देवी-वागीशत्व-प्रदायकः। इदं वाग्भव-कूटं तु बालिशस्यापि मूर्द्धनि। हस्तं दत्वा पठेत् सिद्धमष्टोत्तर-शतं प्रिये! सोऽपि श्लोकं महेशानि! करोत्येव न संशयः। बालिशस्य मूर्खस्य। सत्तर्क-पद-वाक्यार्थ-शब्दालङ्कार-सार-वित्। जिह्वायां न्यासनाद् देवि! मूकोऽपि सुकविर्भवेत्।

वृहन्नील-तन्त्रे सप्तम-पटले द्वितीय-विद्या त्र्यक्षरी-मन्त्रमधिकृत्य—इदानीं शृणु चार्वङ्गि! कविता-कारकं परम्। प्रयोगं दुर्लभं गोप्यं तव स्नेहात् प्रकाशितम्। चण्डीं चाण्डालिनीं चैव त्यागिनं सर्व-मोहनम्। वीज-त्रयं जपेद् रात्रौ मध्ये चैव रवेर्दिने। अष्टाधिक-सहस्रेण प्रमाणेन जपं चरेत्। शताभिमन्त्रितं कृत्वा पिबेच्च जलमुत्तमम्। सप्त-दिन-प्रयोगेण कविता चित्त-मोदिनी। जायते नात्र सन्देहः सत्यं सुर-गणार्चिते! पाणिना दक्षिणेनैव मधु-लाजान् समानयेत्। नाड़ी-च्छेदाच्च प्रागेव बालं संस्कुर्याच्च साधकः। कवित्वं जायते तेन पाण्डित्यं सुर-वन्दिते! जिह्वां सम्मार्ज्य देवेशि! लिखेद् हेम-शलाकया। दूर्वया वा महा-देवि! जिह्वोष्ठयोः समालिखेत्। पंक्ति-द्वयेन संलेख्य कुर्याच्च बाल-संस्क्रियाम्। एकादशाहे देवेशि! द्वादशाहेऽथ वा पुनः। वर्ण-जात्यादि-भेदेन मासान्तः सम्भविष्यति। यथा-शक्त्युपचारेण देवतां पूजयेत् पुनः। सम्पूज्य देवतां भक्त्या लिखेन्मन्त्रं महेश्वरि! यदा पिता न देशस्थः पितृव्यो मातुलोऽपि वा। लिखित्वा परमेशानि! कुर्याच्च बाल-संस्क्रियाम्। मूल-मन्त्रं लिखेन्मन्त्री यस्यौष्ठे श्वेत-दूर्वया। वाक्योच्चारणतो बालो वाग्मी द्रुत-कविर्भवेत्। जन्म-संस्कारकं नाम्न पुत्रे जाते प्रशस्यते। जिह्वायां च लिखेद् यन्त्रं यत्ने दारु-कुशेन वा। वार-त्रयं तु सम्मार्ज्य दक्षिणेनैव पाणिना। मन्त्रमुच्चार्य प्रत्येकं पंक्तिं कुर्यात् सुशोभनम्। आदौ संस्कारः कर्त्तव्यस्तदन्ते विलिखेन्मनुम्। गन्ध-चन्दन-पुष्पैश्च पूजयेत् तारिणीं शिवे! उत्तराभिमुखो भूत्वा स्थापयेत् पीठमुत्तमम्। पूजयेत् तारिणीं देवीं नाना-भक्ष्यैः सुशोभनैः। षोडशैरुपचारैश्च पूजयेद् भक्ति-भावतः। धूपं दद्याद् गुग्गुलुना सर्व-कर्म-फल-प्रदम्। नारिकेलं तथा रम्भां वदरं वकुलं तथा। वीजपूरं कर्णिकारं शर्करां गन्ध-संयुताम्। मधूदकं कलायं च सिद्धान्नं पायसा-प्लुतम्। माषं मत्स्यं पिष्टकं च दद्यादति-

प्रियं महत् । कविर्वाग्मी भवेत् पुत्रः सर्व-काम-प्रकारकः । जितेन्द्रियः सत्य-वादी धार्मिको जायते महान् । दद्यादित्यनेन सम्प्रदानोपस्थितेर्वचने ब्राह्मण-पदस्याभावेऽपि ब्राह्मणेभ्य इति लभ्यते । अतो ब्राह्मण-सम्प्रदान-कमाषादि-दान-व्यवहार इति ।

महा-निर्वाण-तन्त्रे—कृतोपनयने पुत्रे तेन नाम्ना समाह्वयेत् । प्राय-श्चित्तादिकं कृत्वा जात-कर्म समापयेत् । नालच्छेदं ततो धात्री कुर्यादुत्साह-पूर्वकम् । यावन्न च्छिद्यते नालं तावत् शौचं न बाधते । प्रागेव नाड़ि-काच्छेदात् दैवीं पैत्रीं क्रियां चरेत् । कुमार्याश्चापि कर्त्तव्यमेवमेवममन्त्रकम् । इति जात-कर्म ।

निष्क्रमण-प्रयोगः

षष्ठे वा चाष्टमे मासि नाम कुर्यात् प्रकाशतः । स्नापयित्वा शिशुं माता परिधाप्याम्बरे शुभे । भर्त्तुः पार्श्वं समागत्य प्राङ्मुखं स्थापयेत् सुतम् । अभिषिञ्चेत् शिशोर्मूर्ध्नि स-हिरण्य-कुशोदकैः—'जाह्नवी यमुना रेवा सपवित्रा सरस्वती । नर्मदा वरदा कुम्भी सागराश्च सरांसि च । एते त्वामभिषिञ्चन्तु धर्म-कामार्थ-सिद्धये । ह्रीं । आपो हिष्ठा मयो भुवस्ता न ऊर्जे दधातन । महेरणाय चक्षसे यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः तस्मा अरङ्गमाम वो क्षयाय जिन्वथ आपो जनयथा च नः ।' अभिषिच्य त्रिभिर्मन्त्रैः पूर्व-वद् वह्नि-संस्क्रियाम् । कृत्वा सम्पाद्य धारान्तं दद्यात् पञ्चाहुतीः सुधीः । अग्नये प्रथमं दत्वा वासवाय ततः परम् । ततः प्रजानां पतये विश्वेदेवेभ्य एव । ब्रह्मणे चाहुतीं दद्याद् वह्नौ पार्थिव-संज्ञके । ततोऽङ्के पुत्रमादाय श्रावयेद् दक्षिण-श्रुतौ । स्वल्पाक्षरं सुखोच्चार्यं शुभं नाम विचक्षणः । श्रावयित्वा त्रिधा नाम ब्राह्मणेभ्यो निवेद्य च । ततः समापयेत् कर्म कृत्वा स्विष्टिकृतादिकम् । कन्याया निष्क्रमो नास्ति वृद्धि-श्राद्धं न विद्यते । नामान्न-प्राशनं चूडां कुर्याद् धीमानमन्त्रकम् । चतुर्थे मासि षष्ठे वा कुर्यान्निष्क्रमणं शिशोः । कृत-नित्य-क्रियस्तातः सम्पूज्य गण-नायकम् । स्नापयित्वा तु तनयं वस्त्रालङ्कार-भूषितम् । संस्थाप्य पुरतो विद्वानिमं मन्त्रमुदीरयेत्—

'ब्रह्मा विष्णुः शिवो दुर्गा गणेशो भास्करस्तथा । इन्द्रो वायुः कुबेरश्च वरुणोऽग्निर्बृहस्पतिः । शिशोः शुभं प्रकुर्वन्तु रक्षन्तु पथि सर्वदा ।'

इत्युक्त्वाङ्के समादाय गीत-वाद्य-पुरःसरम्। बहिर्निष्क्रामयेद् बालं सानन्दैः स्व-जनैः सह। गत्वाध्वनि कियद्-दूरं शिशुं सूर्यं निरीक्षयेत्—

'ह्रीं तच्चक्षुर्देव-हितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतं जीवेम शरदः शतम्। शृणुयाम शरदः शतम्।'

इत्यादित्यं दर्शयित्वा समागत्य निजालयम्। अर्घ्यं दत्वा दिनेशाय स्व-जनान् भोजयेत् पिता। इति निष्क्रमणम्॥

### अन्न-प्राशन-विधिः

षष्ठे मासि कुमारस्य वाप्यष्टमे शिवे! पितृ-भ्राता पिता वापि कुर्यादन्नाशन-क्रियाम्। पूर्व-वद् देव-पूजादि वह्नि-संस्करणं तथा। एवं धारान्त-कर्माणि सम्पाद्य विधि-वत् पिता। दद्यात् पञ्चाहुतीस्तत्र शुचि-नाम्नि हुताशने। अग्निमुद्दिश्य प्रथमां द्वितीयां वासवं स्मरन्। ततः प्रजापतिं देवं विश्वान् देवान् ततः परम्। ब्रह्माणं च समुद्दिश्य पञ्चमीमाहुतिं त्यजेत्। ततोऽग्नावन्नदां ध्यात्वा दत्त-पञ्चाहुतिः पिता। तत्राथवा गृहेऽन्य-स्मिन् वस्त्रालङ्कार-शोभितम्। क्रोड़े निधाय तनयं प्राशयेत् पायसामृतम्। पञ्च-प्राणाहुतेर्मन्त्रैर्भोजयित्वा तु पञ्चधा। ततोऽन्न-व्यञ्जनादीनां दत्वा किञ्चित् शिशोर्मुखे। शङ्ख-तूर्यादि-घोषेण प्रायश्चित्तं समापयेत्। इत्यन्न-प्राशनं प्रोक्तं चूड़ा-विधिमतः शृणु।

### चूड़ाकरणम्

तृतीये पञ्चमे वर्षे कुलाचारानुसारतः। चूड़ा-कर्म शिशोः कुर्याद् बाल-संस्कार-सिद्धये। देव-पूजादि-धारान्त-कर्म निष्पाद्य साधकः। सत्या-ग्नेरुत्तरे देशे वृष-गोमय-पूरितम्। तिल-गोधूम-संयुक्तं शरावं स्थापयेद् बुधः। कवोष्णं सलिलं चापि क्षुरमेकं सु-शाणितम्। आसाद्य तनयं तत्र जनकः स्वीय-वामतः। संस्थाप्य जननी-क्रोड़े कवोष्ण-सलिलैश्च तैः। वारुणं दशधा जप्त्वा सम्मार्ज्य शिशुमूर्ध्वजान्। मायया कुश-पत्राभ्यां जुष्टिमेकां प्रकल्पयेत्। मायां लक्ष्मीं त्रिधा जप्त्वा गृहीत्वा लौहजं क्षुरम्। छित्वा तु जुष्टिका-मूलं मातृ-हस्ते निवेशयेत्। कुमार-माता हस्ताभ्यामादाय गोमयान्विते। शरावे स्थापयेज्जुष्टिं नापिताय पिता वदेत्—'क्षुर-मुण्डे शिशोः क्षौरं सुखं साधय ठ-द्वयम्।' पठित्वा नापितं पश्यन् सत्य-नामनि पावके। प्रजा-पतिं समुद्दिश्य प्रदद्यादाहुति-त्रयम्। नापितेन कृत-क्षौरं

स्नापयित्वा शिशुं ततः । वस्त्रालङ्कार-माल्येन भूषयित्वाऽग्नि-सन्निधौ । स्व-वाम-भागे संस्थाप्य स्विष्टि-कृद् होममाचरेत् । प्रायश्चित्तं ततः कृत्वा दद्यात् पूर्णाहुतिं पिता—'माया शिशो ! ते कुशलं कुरुतां विश्व-कृद् विभुः ।' पठित्वैनं शिशोः कर्णे स्वर्ण-मय्या शलाकया । राजत्या लौह-मय्या वा तत्र वेधं प्रकल्पयेत् । आपोहिष्ठेति मन्त्रेण अभिषिच्य सुतं ततः । शान्त्यादि-दक्षिणां कृत्वा चूडा-कर्म समापयेत् ।

गर्भाधानादि-चूड़ान्तं समानं सर्व-जातिषु । शूद्र-सामान्य-जातीनां सर्वमेतदमन्त्रकम् । जात-कर्मादि-चूड़ान्तं कुमार्याश्चाप्यमन्त्रकम् । कर्तव्यं पञ्चभिर्वर्णैरेकं निष्क्रमणं विना ।

### अथोपनयनम्

अथोच्यते द्विजातीनामुपवीति-क्रिया-विधिः । यस्मिन् कृते द्वि-जन्मानो दैव-पैत्र्याधिकारिणः । गर्भाष्टमेऽष्टमे वाब्दे कुर्यादुपनयनं शिशोः । षोडशाब्दाधिको नोपनेतव्यो निष्क्रियो हि सः । कृत-नित्य-क्रियो विद्वान् पञ्च देवान् समर्चयेत् । गौर्यादि-मातृकाश्चैव वसु-धारां प्रकल्पयेत् । वृद्धि-श्राद्धं ततः कुर्यात् देवता-पितृ-तृप्तये । कुशण्डिकोक्त-विधिना धारा-होमान्त-माचरेत् । प्रातः कृत्वाशनं बालं सुस्नातं च स्वलंकृतम् । शिखां विना कृत-क्षौरं क्षौमाम्बर-विभूषितं । छाया-मण्डपमानीय समुद्भव-हुताशितः । समीपे चात्मनो वामे संस्थाप्य विमलासने । शिष्यं वदेद् 'ब्रह्मचर्यं कुरु वत्स !' ततः शिशुः । 'ब्रह्मचर्यं करोमी' ति गुरवे विनिवेदयेत् । ततो गुरुः प्रसन्नात्मा शिशवे शान्त-चेतसे । काषाय-वाससी दद्याद् दीर्घायुष्ट्वाय वर्चसे । मौञ्जीं कुश-मयीं वापि त्रि-वृत्तां ग्रन्थि-संयुताम् । तूष्णीं च मेखलां दद्यात् काषाय-वस्त्र-धारिणे । मायामुच्चार्य 'सुभगा मेखला स्याच्छुभ-प्रदा ।' इत्युक्त्वा मेखलां बध्वा मौनी तिष्ठेद् गुरोः पुरः ।

'यज्ञोपवीतं परमं पवित्रं बृहस्पतेर्यत् सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ।' मन्त्रेणानेन शिशवे दद्यात् कृष्णा-जिनान्वितम् ।

### तत्र यज्ञ-सूत्र-परिमाणम्

यज्ञ-सूत्र-परिमाणं तु मातृका-भेद-तन्त्रे एकादश-पटले—यज्ञ-सूत्रस्य यन्मानं तत् शृणुष्व वरानने ! ऋग्वेदी धारयेत् सूत्रं नाभेरूर्द्धं स्तनादधः ।

यजुषां सूत्र-मानं हि आश्चर्यं शृणु शैलजे ! बाहु-मूल-प्रमाणेन यज्ञ-सूत्रं द्विजातिभिः। धारणीयं प्रयत्नेन नान्यदघ्नं कदाचन। नान्यदघ्नं नान्य-प्रमाणमित्यर्थः। सामगस्य दीर्घ-सूत्रं त्रि-विधं वर-वर्णिनि ! ब्रह्म-रन्ध्रान्नाभि-देश-पर्यन्तं यज्ञ-सूत्रकम्। अथवापि च ग्रीवायामारोप्य नाभि-मास्पृशेत्। तस्मात् पृष्ठे मेरु-दण्ड-पर्यन्तं यज्ञ-सूत्रकम्। अथवा परमेशानि ! प्रकारान्तरमुच्यते। ग्रीवाया दक्षिणांगुष्ठ-पर्यन्तं यज्ञ-सूत्रकम्। अथर्वो धारयेत् सूत्रं यत्नेन यजुषां मतम्। अथवा धारयेत् सूत्रं सामगस्य प्रमाणतः। अथवा धारयेत् यज्ञ-सूत्रं परम-मोहनम्। आज्ञा-चक्रान्नाभि-देश-पर्यन्तं यज्ञ-सूत्रम्।

### यज्ञ-सूत्र-प्रमाणाज्ञाने दोषः

एतत् सङ्केतमज्ञात्वा यः कुर्यात् सूत्र-धारणम्। स चण्डाल-समो देवि ! यदि व्यास-समो भवेत्।

### यज्ञ-सूत्रस्य कर्त्तनम्

प्रसङ्गात् यज्ञ-सूत्रस्य कर्त्तनं जीव-न्यासश्च लिख्यते। गायत्री-तन्त्रे चतुर्थ-ब्राह्मण-पटले—कन्या च कर्त्तयेत् सूत्रं पति-पुत्र-वती तथा। विधवाऽ-विधवा वापि पुत्र-हीनापि ब्राह्मणी। क्षत्राणी वैश्य-दारा च कर्त्तयेन्न तु शूद्रिणी। दीक्षिता यदि सा शूद्रा कर्त्तने न च निन्दिता। सच्छूद्रा यदि सा भद्रे ! शुद्धा सा सूत्र-कर्त्तने। असच्छूद्रा महेशानि ! निन्दिता सूत्र-कर्त्तने। कार्पास-सम्भवं सूत्रं यज्ञ-सूत्रं विनिर्मितम्। सूक्ष्माति-सूक्ष्मं परमं सर्व-देव-मयं तथा। इति निर्माणम्।

### अस्य ग्रन्थि-प्रकारः

अणु-ग्रन्थिः—ग्रन्थि-काले स्मरेद् विप्रान् सूत्रं भवति मूर्तिमत्। ब्रह्मा च काश्यपो विप्रः सनकश्च सनन्दनः। सनत् सनातनो विप्रो नारदः कपिल-स्तथा। मरीचिरत्रिः पुलहः पुलस्त्यो गौतमः क्रतुः। भृगुर्दक्षः प्रचेताश्च वशिष्ठो वाल्मीकिस्तथा। द्वैपायनो भरद्वाजः शुक्रो जैमिनिरेव च। विदूरथः शुनः-शेफो जातुकर्णश्च रौरवः। और्वः संवर्त्तकः शुक्रः सुराचार्यो वृहस्पतिः। चन्द्रः सूर्यो बुधः श्रीमान् यज्ञ-सूत्रस्य ग्रन्थिषु। तिष्ठन्तु मम वामांशे वाम-कन्धे त्वहर्निशम्। ब्रह्माद्या देवताः सर्वा यज्ञ-सूत्रस्य देवताः।

[प्राण-तोषिणी तन्त्रम् : १३८

अस्य जीव-न्यासः

जीव-न्यासं प्रवक्ष्यामि यज्ञ-सूत्रस्य संशृणु । यज्ञ-सूत्रं करे कृत्वा दक्षिणे द्विज-सत्तमः । गायत्रीं प्रथमं जप्त्वा प्रणवं प्रजपेत् शतम् । गायत्रीं पुनरुक्त्वा वै वाम-स्कन्धे निवेशयेत् । जीव-न्यासं विना देवि ! यज्ञ-सूत्रं च सूत्र-वत् ।

यज्ञोपवीतादि-धारण-विधिः

महा-निर्वाणे—यज्ञोपवीतं दण्डं च वैणवं खादिरं च वा । पालाश-मथवा दद्यात् क्षीर-वृक्ष-समुद्भवम् । आपोहिष्ठेति मन्त्रेण मायया पुटितेन च । त्रिरावृत्या कुशाम्भोभिधृत-दण्डोपवीतकम् । अभिषिच्य ततस्तोयैः पूरयेद् बालकाञ्जलिम् । तदञ्जलिं दिनेशाय दातारं ब्रह्म-चारिणम् । तच्चक्षुरिति मन्त्रेण दर्शयेद् भास्करं गुरुः । दृष्ट्वा भास्करमाचार्यो वदेन्माणवकं ततः —'मम व्रते मनो धेहि मम चित्तं ददामि ते । जुषस्वैक-मना वत्स ! मम वाचोऽस्तु ते शिवम् ।' हृदि स्पृष्ट्वा पठित्वैनं 'किं नामासी' ति तं वदेत् । 'शिष्यस्त्वमुक-शर्माऽहं भवन्तमभिवादये ।' 'कस्य त्वं ब्रह्मचारी' ति गुरौ पृच्छति पार्वती ! शिष्यः सावहितो ब्रूयाद् 'भवतो ब्रह्मचार्यहम्' । 'इन्द्रस्य ब्रह्मचारी त्वमाचार्यस्ते हुताशनः ।' इत्युक्त्वा स गुरुः पश्चाद् देवेभ्यस्तं समर्पयेत्—'त्वा प्रजा-पतये वत्स ! सवित्रे वरुणाय च । पृथिव्यै सर्व-वेदेभ्य एव च । समर्पयामि ते सर्वे रक्षन्तु त्वां निरन्तरम् ।' ततो माणवको वह्निं दक्षिणा-वर्त्म-योगतः । गुरुं प्रदक्षिणी-कृत्य आसने पुनराविशेत् । गुरुः शिष्येण सम्पृष्टः समुद्भव-हुताशने । पञ्च देवान् समुद्दिश्य दद्यात् पञ्चाहुतीः प्रिये ! प्रजापतिस्ततः शक्रो विष्णुर्ब्रह्मा शिवस्तथा । मायादि-वह्निजायान्तैर्जुहुयात् स्व-स्व-नामभिः । अनुक्त-मन्त्रे सर्वत्र विधिरेष प्रकीर्तितः । ततो दुर्गा महा-लक्ष्मीः सुन्दरी भुवनेश्वरी । इन्द्रादि-दश-दिक्पाला भास्करादि-नव-ग्रहाः । प्रत्येक-नाम्ना हुत्वैतान् वाससाच्छाद्य बालकम् । पृच्छेन्माणवकं प्राज्ञो ब्रह्मचर्याभिमानिनम्—'को वाश्रयस्ते तनय ! ब्रूहि किं ते मनोगतम् ?' ततः शिष्यः सावहितो धृत्वा गुरु-पद-द्वयम्—'करोतु मामाश्रमिणं ब्रह्म-विद्योपदेशतः ।' एवं प्रार्थयमानस्य दक्ष-कर्णे शिशोस्तदा । श्रावयित्वा त्रिधा तारं सर्व-मन्त्र-मयं शिवे ! व्याहृति-त्रयमुच्चार्य सावित्रीं श्रावयेद् गुरुः । ऋषिः सदाशिवः प्रोक्तश्छन्दोऽनुष्टुबुदाहृतम् । अधिष्ठात्री च सावित्री

मोक्षार्थं त्रिनियोगिता। प्रन्तर्गतं महद् वर्त्री वरणीयं यथात्ममिः। ध्यायेम तत् पदं सत्यं सर्व-व्यापि सनातनम्। यो भर्गः सर्व-साक्षी नो मनो-बुद्धीन्द्रियाणि च। धर्मार्थ-काम-मोक्षेषु प्रेरयेद् विनियोजयेत्। इत्थमर्थ-युतां ब्रह्म-विद्यामासाद्य सद्-गुरुः। शिष्यं नियोजयेद देवि! गृहस्थाश्रम-कर्मसु।

'ब्रह्मचर्योचितं वेशं वत्सेदानीं परित्यज। शाम्भवोदित-मार्गेण देवान् पित्रीन् समर्चय। ब्रह्म-विद्योपदेशेन पवित्रं ते कलेवरम्। प्राप्ता गृहस्थाश्रमिता तदुक्तं कर्म कल्पय। उपवीत-द्वयं दिव्य-वस्त्रालंकरणानि च। गृहाण पादुकाच्छत्रं गन्ध-माल्यानुलेपनैः।' ततः काषाय-वसनं कृष्णाजिन-समन्वितम्। यज्ञ-सूत्रं मेखलां च दण्डं भिक्षा-करण्डकम्। आचारार्जितां भिक्षां समर्प्य गुरवे शिवे! शुद्धोपवीत-युगलं परिधायाम्बरे शुभे। गन्ध-माल्य-धरस्तूष्णीं तिष्ठेदाचार्य-सन्निधौ। ततो गृहस्थाश्रमिणं शिष्यमेतद् वदेद् गुरुः—'जितेन्द्रियः सत्य-वादी ब्रह्म-विद्या रतो भव। स्वाध्यायाश्रम-कर्माणि यथा-धर्मेण साधय। इत्यादिश्य त्विदं पश्चात् समुद्भव-हुताशने। मायादि-प्रणवान्तेन भूर्भुवः स्वस्त्रयेण च। हावयित्वा त्रिधाचार्यः स्विष्टि-कृद् होममाचरेत्। दत्वा पूर्णाहुतिं भद्रे! व्रत-कर्म समापयेत्।

बीज-सेकादि-संस्कारा व्रतान्ताः पितृतो नव। उद्वाहः पितृतो वापि स्वतोऽपि सिद्ध्यति प्रिये!

### दार-परिग्रहस्यावश्यकता

मत्स्य-सूक्ते एक-त्रिंशत्-पटले—अदारस्य गतिर्नास्ति सर्वास्तस्याफलाः क्रियाः। सुरार्चनं महा-यज्ञं हीन-भार्यो विवर्जयेत्। एक-चक्र-रथो यद्-वदेक-पक्षो यथा खगः। अभार्योऽपि नरस्तद्-वदयोग्यः सर्व-कर्मसु। भार्या-हीने क्रिया नास्ति भार्या-हीने कुतः सुखम्। भार्या-हीने गृहं कस्य तस्माद् भार्यां समाश्रयेत्। सर्वस्वेनापि देवेशि! कर्त्तव्यो दार-संग्रहः। इति दार-परिग्रहस्यावश्यकत्वम्।

### धर्म-पत्नी-काम-पत्नी-निर्णयः

तत्रैव—सन्न्यासमथवा कार्यं तृतीयं नोपपद्यते। सवर्णा ब्राह्मणी या तु धर्म-पत्नी च सा स्मृता। असवर्णा च या भार्या काम-पत्नी तु सा स्मृता। इति धर्म-पत्नी-निर्णयः।

महा-निर्वाण-तन्त्रे—विवाहे हि कृत-स्नानः कृत-नित्य-क्रियः कृती। पञ्च देवान् समभ्यर्च्य गौर्यादि-मातृकास्तथा। वसोर्धारां कल्पयित्वा वृद्धि-श्राद्धं समाचरेत्। रात्रौ प्रतिश्रुतं पात्रं गीत-वाद्य-पुरःसरम्। छाया-मण्डप-मानीय उपविश्य वरासने। वासवाभिमुखं दाता पश्चिमाभिमुखो विशेत्। आचार्यः स्वस्तिमृद्धिञ्च कथयेद् ब्राह्मणैः सह। साधु प्रश्नं वरं पृच्छेदर्चना-प्रश्नमेव च। वरात् प्रश्नोत्तरं नीत्वा पाद्याद्यैर्वरमर्चयेत्। समर्पयामि वाक्येन देश-द्रव्यं समर्पयेत्। पादयोरर्पयेत् पाद्यं शिरस्यर्घ्यं निवेदयेत्। आचम्य वदने दद्याद् गन्धं माल्यं सुवाससी। दिव्याभरण-रत्नानि यज्ञ-सूत्रं समर्पयेत्। ततस्तु भाजने कांस्ये कृत्वा दधि घृतं मधु। 'समर्पयामि' वाक्येन मधुपर्कं करेऽर्पयेत्। वरोऽपि पात्रमादाय वामे पाणौ निधाय च। दक्षांगुष्ठानामि-काभ्यां प्राणाहुत्युक्त-मन्त्रकैः। पञ्चधाघ्राय तत्-पात्रमुदीच्यां दिशि धारयेत्। मधुपर्कं समाप्यैवं पुनराचामयेद् द्वयम्। दूर्वाक्षताभ्यां जानातुर्विधृत्य जानु दक्षिणम्। स्मृत्वा विष्णुं तत् सदिति मास-पक्षौ तिथिं ततः। समुल्लिख्य निमित्तानि वृणुयाद् वरमुत्तमम्। गोत्र-प्रवर-नामानि प्रत्येकं प्रपितामहात् षष्ठ्यन्तानि समुच्चार्य वरस्य जनकावधि। द्वितीयान्तं वरं ब्रूयाद् गोत्र-प्रवर-नामभिः। तथैव कन्यामुद्दिश्य ब्राह्मोद्वाहेन पण्डितः। दातुं भवन्तमित्युक्त्वा वृणेऽहमिति कीर्तयेत्।

वृतोऽस्मीति वरो ब्रूयाद् ततो दाता वदेद् वरम्। यथा-विहितमित्युक्त्वा विवाह-कर्म कुर्विति। वरो ब्रूयाद् यथा-ज्ञानं करवाणि तदुत्तरम्। ततः कन्यां समानीय वस्त्रालङ्कार-भूषिताम्। वस्त्रान्तरेण सञ्छाद्य स्थापयेद् वर-सम्मुखे। पुनर्वरं समभ्यर्च्य वासोऽलङ्करणादिभिः। वरस्य दक्षिणे पाणौ कन्या-पाणिं नियोजयेत्। तन्मध्ये पञ्च-रत्नानि फल-ताम्बूलमेव वा। दत्वा-र्चयित्वा तनयां वराय विदुषेऽर्पयेत्। प्राग्-वत् त्रै-पुरुषाख्यानं निमित्ताख्यान-मेव च। आत्मनः काममुद्दिश्य चतुर्थ्यन्तं वरं वदेत्। कन्याभिधां द्वितीया-न्तामर्चितां समलंकृताम्। साच्छादनां प्रजापति-देवता-कामुदीरयन्। तुभ्य-महमिति प्रोच्य दद्यात् सम्प्रददे वदन्। वरः स्वस्तीति स्वीकुर्यात् सम्प्रदाता वरं वदेत्। धर्मे चार्थे च कामे च भवता भार्यया सह। वर्तितव्यं वरो वाच-मुक्त्या काम-स्तुतिं पठेत्। दाता कामो ग्रहीतापि कामायादाच्च कामिनीम्। कामेन त्वां प्रतिगृह्णामि कामः पूर्णोऽस्तु चावयोः।

ततो वदेत् सम्प्रदाता कन्यां जामातरं प्रति। 'प्रजापति-प्रसादेन युवयोरभि-वाञ्छितम्। पूर्णमस्तु शिवं चास्तु धर्मं पालयतं युवाम्।' तत आच्छाद्य वस्त्रेण सम्प्रदाता सुमङ्गलैः। परस्पर-मुखालोकं कारयेद् वर-कन्ययोः। ततो हिरण्य-रत्नानि यथा-शक्त्यनुसारतः। जामात्रे दक्षिणां दद्यादच्छिद्रमवधारयेत्। वरस्तु भार्यया सार्द्धं तद्रात्रौ दिवसेऽपि वा। कुशण्डिकोक्त-विधिना वह्नि-स्थापनमाचरेत। योजकाख्यः पावकोऽत्र प्राजापत्यश्चरुः स्मृतः। धारान्तं कर्म सम्पाद्य दद्यात् पश्चाहुतीर्वरः। शिवं दुर्गां तथा विष्णुं ब्रह्माणं वज्र-धारिणम्। ध्यात्वैकैकं समुद्दिश्य जुहुयात् संस्कृतेऽनले। भार्यायाः पाणि-युगलं गृह्णीयात् तान्युदीरयन्। 'पाणिं गृह्णामि सुभगे! गुरुदेव-रता भव। गार्हस्थ्यं धर्म-कर्मेण यथावदनुशीलय।' घृतेन स्वामि-दत्तेन लाजैर्भ्रात्राहृतैः शिवे! प्रजापतिं समुद्दिश्य दद्याद् द्वे चाहुती वरः। प्रदक्षिणी-कृत्य वह्निमुत्थाय भार्यया सह। दुर्गां शिवं रमां विष्णुं ब्राह्मीं ब्रह्माणमेव च। युग्मं युग्मं समुद्दिश्य त्रिस्त्रिधा हवनं चरेत्। अश्म-मण्डलिका-सप्तारोहौ कुर्यादमन्त्रकम्। निशायां चेत् तदा स्त्रीभिः पश्येद् धूम्रामरुन्धतीम्। प्रत्यावृत्यासने सम्यगुपविश्य वरस्तदा। स्विष्टि-कृद् होम-पूर्णाहुत्यन्तं कर्म समापयेत्।

ब्राह्मो विवाहो विहितो दोष-हीनः सवर्णया।

कुल-धर्मानुसारेण गोत्र-भिन्ना सपिण्डजा। ब्राह्मोद्वाहेन या ग्राह्या सैव पत्नी गृहेश्वरी। तदनुज्ञां विना ब्राह्म-विवाहं नाचरेत् पुनः। अस्या अपत्ये तद्-वंशे विद्यमाने कुलेश्वरि!

## दश-विध-संस्कार-प्रयोगः

अथ महा-निर्वाण-तन्त्रोक्त-दश-संस्कार-प्रयोगः—संस्कारैर्विना दैव-पैतृ-कर्मानधिकार-तया सर्वैर्विप्रादिभिर्वर्णैः स्व-स्व-वर्णोक्ताः संस्काराः कार्याः। दश-संस्कारास्तु वीज-सेक-पुंसवन-सीमन्तोन्नयन-जातकर्म-नामकरण-निष्क्रमणान्न-प्राशन-चूड़ोपनयन-विवाहाः। ततः शूद्राणामधम-शूद्राणामुपनयनं नास्ति तेषां नवैव संस्काराः। ब्राह्मण-क्षत्रिय-वैश्यानां तु दश-संस्कारा इति।

[प्राण-तोषिणी तन्त्रम् : १४३

## तन्त्रादौ गर्भाधान-प्रयोगः

अथ गर्भाधानम्—कृत-नित्य-क्रिय आसने उपविश्य दीक्षा-पद्धति-लिखिष्यमाण-मन्त्रैर्घटान् संस्थाप्य तत्र ब्रह्म-दुर्गा-गणेश-विष्णु-सूर्य-शिवादित्यादि-नव-ग्रहेन्द्रादि-दश-दिक्-पालान् सम्पूज्य ततो गौर्यादि-षोडश-मातृकाः पूजयेत् । षोडश-मातृकास्तु—गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा शान्तिः पुष्टिर्धृतिः क्षमा । आत्म-देवता कुल-देवता एतावत्यः । पूजा-क्रमस्तु—अर्घ्य-स्थापनं कृत्वा बद्धाञ्जलिः—ह्रीं आयान्तु मातरः सर्वास्त्रिदशानन्द-कारिकाः । विवाह-व्रत-यज्ञानां सर्वाभीष्टं प्रकल्प्यताम् यान-शक्ति-समारूढाः सौम्य-मूर्ति-धराः सदा । आयान्तु मातरः सर्वा यज्ञोत्सव-समृद्धये । इति मातृका-गणमावाह्य ह्रीं गौर्यै, मात्रे नम इति पाद्यादिभिर्यथा-शक्ति सम्पूज्य एवं पद्मायै मात्रे नम इत्यादिभिः षोडश-मातृकार्चनं स्व-शक्त्या विधाय नाभि-मात्रायां भित्तौ प्रादेश-मात्र-मध्ये सिन्दूरेण रक्त-चन्दनेन वा सप्त वा पञ्च वा विन्दून् दद्यात् । ततः प्रत्येक-विन्दौ क्लीमिति ह्रीमिति श्रीमिति वीज-त्रयेणाविच्छिन्नां घृत-धारां दत्वा तत्र वसुं पूजयेत् । ततो होम-प्रकरण-लेख्य-स्थण्डिलादि-वह्नि-स्थापनान्तं कर्म कृत्वा होम-द्रव्याणि संस्कृत्य प्राजापत्यं च श्रपयेत् । ततो वायु-नामानमग्निं ध्यात्वा आवाह्य घृतेन पाद्यादिभिः सम्पूज्य धारा-होमान्तं कर्म कृत्वा 'ह्रीं प्रजापतये स्वाहा' इति मन्त्रेण चरुणा वार-त्रयं जुहुयात् । ततो 'ह्रीं विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि यच्छतु । आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते । स्वाहा' इत्यनेन चरुणा वारमेकं जुहुयात् । तत आज्येन चरुणा साज्येन न चरुणा वा सूर्य-प्रजापति-विष्णून् ध्यात्वा 'ह्रीं सूर्याय स्वाहा, ह्रीं प्रजापतये स्वाहा, ह्रीं विष्णवे स्वाहा' इति मन्त्र-त्रयेण प्रत्येकं जुहुयात् ।

ततः सिनीवाली-सरस्वत्यश्विनान् ध्यात्वा 'ह्रीं । गर्भं धेहि सिनी-वाली गर्भं धेहि सरस्वती । गर्भं ते अश्विनौ देवावाधत्तां पुष्कर-स्रजौ । स्वाहा' इत्यनेन घृतेन जुहुयात् । ततो मनसा रविं विष्णुं ध्यात्वा 'क्लीं स्त्रीं ह्रीं श्रीं हुम् इत्यमुष्यै पुत्र-कामायै गर्भमाधेहि स्वाहा ।' इति मन्त्रेणाज्येन जुहुयात् । ततो विष्णुं मनसा ध्यात्वा 'ह्रीं । यथेयं पृथिवी देवी ह्युत्ताना गर्भमादधे । तथा त्वं गर्भमाधेहि दशमे मासि सूतये । स्वाहा' इति मन्त्रेणाज्येन जुहुयात् ।

ततः पुनरपि विष्णुं मनसा ध्यात्वा 'ह्रीं'। विष्णोर्ज्येष्ठेन रूपेण नार्यामस्यां वरीयसं। सुतमाधेहि। 'स्वाहा' इत्यनेनाज्येन जुहुयात्। ततः 'क्लीं ह्रीं स्त्रीं ह्रीं क्लीं ह्रीं' इति मन्त्रेण बध्वाः शिरः स्पृशेत्।

ततः पुत्र-वतीभिर्नारीभिः परिवेष्ठितो हस्ताभ्यां बध्वाः शिर आलम्य विष्णुं दुर्गां विधिं सूर्यं च ध्यात्वा तस्याः क्रोड़ाञ्चले फल-त्रयं पतिर्दद्यात्। ततः स्विष्टिकृतं हुत्वा प्रायश्चित्त-होमं कुर्यात्। ततः प्रदोष-समये गौरी-सहित-शङ्करं सम्पूज्य भास्कराघ्यं दद्यादिति।

ततस्तद् रात्रावन्य-रात्रौ वा युग्मायां भार्यया सह भवनान्तरं गत्वा प्रजापतिं मनसा ध्यात्वा पत्नीं संस्पृश्य शय्या-शोधनं कुर्यात्। यथा—'ह्रीं आवयोः सुप्रजायै त्वं शय्ये! शुभ-करी भव।' ततो भार्यया सह शय्यामारुह्य प्राङ्-मुख उदङ्-मुखो वा उपविश्य स्त्रियं पश्यन् तन्मस्तके हस्तं दत्वा वामेन पाणिना तामालिङ्ग्य तस्याः शीर्षे 'क्लीं' इति शतधा, चिबुके 'ऐं' इति शतधा, कण्ठे 'श्रीं' इति विंशतिधा, स्तन-द्वन्द्वे 'श्रीं' इति शतधा, हृदये 'ह्रीं' इति पञ्च-विंशतिधा जप्त्वा योनौ करं दत्वा 'क्लीं ऐं' इति अष्टोत्तर-शतं जप्त्वा लिङ्गेऽपि 'ऐं क्लीं' इत्यष्टोत्तर-शतं जपेत्। ततो 'ह्रीं' इति मन्त्रेण योनिं विकाश्य सुत-प्राप्तये स्त्रियमुपगच्छेत्। ततो रेतः-पात-समये विश्व-कर्माणं ध्यात्वा नाभेरधस्तात् चित्कुण्डे रेतः पातयेत्। शुक्र-पातान्त-समये इमं पठेत्—'ह्रीं। यथाग्निना सगर्भा भूर्द्यौर्यथा वज्र-धारिणा। वायुना दिग् गर्भवती तथा गर्भवती भव।' इति गर्भाधानम्।

पुंसवन-प्रयोगः

अथ पुंसवनम्—पतिः कृत-नित्य-क्रियः पञ्च-देवता-पूजादि-वृद्धि-श्राद्धान्तं गर्भाधान-पद्धत्युक्तं विधाय ततो वह्नि-स्थापनादिं कृत्वा चन्द्र-नामानमग्निं ध्यात्वावाह्य सम्पूज्य प्राजापत्यं चरुं पचेत्। ततो गव्ये दधि यवमेकं द्वौ माषौ च निक्षिप्य स्त्रियं पृच्छेत्—'हे भद्रे! किं त्वं त्रिः कृतं पिबसि' इति। ततः स्त्री ब्रूयात्—'मया पुंसवनं कृतं पीयते।' इत्युक्त्वा यव-माष-युत-दधि-प्रसृति-त्रयं पिबेत्। ततो जीव-वत्साभिर्वनिताभिस्तां याग-स्थानं समानयेत्। ततो वाम-भागे तां संस्थाप्य चरुमानीय 'ह्रीं हुं ये चात्र विघ्न-कर्त्तारो ये च गर्भ-विनाशकाः। भूताः प्रेताः पिशाचाश्च वेताला बाल-घातकाः। तान् सर्वान्नाशय नाशय गर्भ-रक्षां कुरु स्वाहा।' इत्यनेन मन्त्रेण

रक्षोघ्नं विचिन्त्य प्रजापतिं च ध्यायन् चरुणा द्वादशाहुतीर्जुहुयात् । 'ह्रीं चन्द्रमसे स्वाहे'ति मन्त्रेण पञ्चाहुतीर्दद्यात् । ततो भार्या हृदि स्पृष्ट्वा 'ह्रीं श्रीं' इति मन्त्रं शतं जपेत् । ततः स्विष्टि-कृद् होमस्तदनन्तरं प्रायश्चित्त-होमादि-वह्नि-विसर्जनान्तं कर्म कृत्वा दक्षिणाच्छिद्रावधारणान्तं कुर्यादिति पुंसवनम् ।

### पञ्चामृत-प्रयोगः

अथ पञ्चामृत-दानम्—तत्तु गर्भ-जनन-मासावधिके पञ्चमे मासि गर्भिण्यै देयम् । पञ्चामृतं तु समांशेन दधि-मधु-दुग्ध-घृत-शर्करा-मिश्रित-रूपम् । अनेन स्त्रिया देह-शुद्धिर्भवति । तत्र प्रत्येक-द्रव्ये 'ऐं क्लीं श्रीं ह्रीं हुं लं' इति पञ्चधा जप्त्वा सम्मिश्र्य गर्भिणीं प्राशयेदिति पञ्चामृत-दानम् ।

### सीमन्तोन्नयन-प्रयोगः

अथ सीमन्तोन्नयनम्—तत्तु षष्ठेऽष्टमे वा मासि कर्तव्यम् । तत्राशक्तावपत्य-जननात् पूर्वं कार्यम् । तत्र पतिः पञ्च-देवता-पूजादि-धारा-होमान्तं गर्भाधान-प्रकरणोक्तं विधाय स्त्रिया सहासने उपविश्य शिव-नामानमग्निं ध्यात्वा आवाह्य यथा-शक्ति सम्पूज्य 'ह्रीं विष्णवे स्वाहा, ह्रीं भास्वते स्वाहा, ह्रीं धात्रे स्वाहा' इत्याहुति-त्रयं दद्यात् । ततः सोमं ध्यात्वा 'ह्रीं सोमाय स्वाहा' इति सप्तधा जुहुयात् । अश्विनौ वासवं विष्णुं शिवं दुर्गां च प्रजापतिं च ध्यात्वा प्रत्येकं पञ्चाहुतीर्दद्यात् । ततः पतिः स्वर्ण-कङ्कतिकां दक्षिण-हस्तेन गृहीत्वा स्त्रियाः सीमन्ताद् बद्ध-केशान्त-पाशे निवेश्य शिवं विष्णुं विधिं च ध्यायन् 'ह्रीं । भार्ये ! कल्याणि ! सुभगे ! दशमे मासि सुव्रते ! सुप्रसूता भव प्रीता प्रसादाद् विश्वकर्मणः । आयुष्मति कङ्कतिका वर्चस्वी ते शुभं कुरु ।' इति पठेत् । ततः स्विष्टिकृद्-होम-प्रायश्चित्त-होमौ कृत्वा दक्षिणामग्नि-विसर्जनादिकं च कुर्यादिति सीमन्तोन्नयनम् ।

### जातकर्म-प्रयोगः

अथ जात-कर्म—जात-मात्र-बालकं पिता स्वर्णं दत्वा पश्येत् । ततो गृहान्तरे गर्भाधान-पद्धत्युक्तं पञ्च-देवता-पूजादि-धारा-होमान्तं कर्म कृत्वा पञ्चाहुतीर्दद्यात् । 'ह्रीं अग्नये स्वाहा, ह्रीं इन्द्राय स्वाहा, ह्रीं प्रजापतये स्वाहा, ह्रीं विश्वेभ्यो देवेभ्यः स्वाहा, ह्रीं ब्रह्मणे स्वाहा,' इत्येभिर्मन्त्रैरिति ।

ततः कांस्य-पात्र-समांशेन मधु-सर्पिषी समानीय तदुपरि 'ऐं' इति सप्तधा जप्त्वा 'ह्रीं आयुर्वर्चो बलं मेधा वर्द्धतां ते सदा शिशो!' इति मन्त्रेण दक्षिण-हस्तानामिकया शिशुं प्राशयेत्। इत्यायुर्जननं कृत्वा पिता गुप्तं नाम कुर्यात्। ततो जन्म-दिनावधि त्रि-दिनाभ्यन्तरे श्वेत-दूर्वाभिः स्वर्ण-शलाकया वा मधुना बालकस्य जिह्वायां वाग्भव-कूटं लिखेत्। अनेन वाग्भव-कूटेन बालकः पण्डितः सुकविः शब्दालङ्कार-विच्च भवति। यदीमं मन्त्रं कृत-पुरश्चरणो मूर्खस्य शिरसि हस्तं दत्वा अष्टोत्तर-शतं जपेत् तदा सोऽपि श्लोकं करिष्यति। यदि चेमं मूकस्य जिह्वायां न्यसेत् तदा सोऽपि कविर्भवेत्। अथवा द्वितीयायास्त्र्यक्षरीं दूर्वया बालकस्य जिह्वोष्ठौ सम्मार्ज्य पंक्ति-द्वयेन लिखेत्। तत्र क्रमः—नाड़ी-च्छेदात् प्रागेकादशाहे द्वादशाहे मासान्ते वा यथा-शक्ति-उपचारेण तां देवतां सम्पूज्य मन्त्रं लिखेत्। यदि पिता न देशस्थस्तदा पितृ-व्यादिरेतत् कुर्यात्। अथवा श्वेत-दूर्वया कुल-देवता-मन्त्रं बालकस्यौष्ठे लिखेत्। स बालो वाग्मी द्रुत-कविर्भवेत्। ततः स्विष्टि-कृद्-होमादि-वह्नि-विसर्जनान्तं कर्म कुर्यात्। कुमार्या अप्येवं सर्वममन्त्रकं कुर्यात्। तत उत्साह-पूर्वकं धात्री नाड़ीं छिन्द्यात्। तदनन्तरमशौचं भवतीति जातकर्म।

**नामकरण-प्रयोगः**

अथ नामकरणम्—षष्ठेऽष्टमे वा मासि प्रकाशतो नाम कुर्यात्। तत्र माता शिशुं स्नापयित्वा नवे अम्बरे परिधाप्य पत्युः पार्श्वं वाम-क्रीड़ासनमा-गत्य बालं प्राङ्-मुखं स्थापयेत्। ततः पिता स-हिरण्य-कुश-जलेन शिशोर्मू-र्द्धानमभिषिञ्चेदेभिर्मन्त्रैर्यथा—ह्रीं जाह्नवी यमुना रेवा स-पवित्रा सरस्वती। नर्मदा वरदा कुम्भी सागराश्च सरांसि च। एते त्वामभिषिञ्चन्तु धर्म-कामार्थ-सिद्धये। ह्रीं आपो हिष्ठामयो भुवस्ता न ऊर्ज्जे दधातन महेरणाय चक्षसे। यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः। तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः।

इत्यभिषिच्य पूर्व-वद् वह्नि-स्थापनादि-धारा-होमान्तं कर्म कृत्वा पार्थिव-नामानमग्निं ध्यात्वा स्वल्पाक्षरं सुखोच्चार्यं नाम त्रिधा पिता श्राव-यित्वा ब्राह्मणेभ्यो निवेदयेत्। ततः स्विष्टि-कृद् होमान्तं कर्म समापयेत्। एतत् कर्म कन्याया अप्यमन्त्रकं कर्तव्यमिति नामकरणम्।

### निष्क्रमण-प्रयोगः

अथ निष्क्रमणम्—निष्क्रमणं तु चतुर्थे मासि षष्ठे वा कुर्यात्। तत्र पिता कृत-नित्य-क्रियो गणेशं सम्पूज्य शिशुं स्नापयित्वा वस्त्रालङ्कारैर्भूषयित्वा अग्रे संस्थाप्य 'ह्लीं ब्रह्मा विष्णुः' इत्यादि प्रमाण-प्रकरणोक्तं पठित्वा बालकमङ्के निधाय गीत-वाद्य-पुरःसरं सानन्दैः स्व-जनैर्वृतो बहिर्निष्क्रामयेत्। ततः कियद् दूरं गत्वा 'ह्लीं तच्चक्षुर्देव-हितं' इति मन्त्रेण बालकं सूर्यं दर्शयेत्। ततो गृहमागत्य सूर्यायार्घ्यं दत्वा स्व-जनान् भोजयेदिति निष्क्रमणम्।

### अन्नप्राशन-प्रयोगः

अथान्नप्राशनम्—तत्र षष्ठे मासि अष्टमे वा पितृ-भ्राता पिता वा अन्न-प्राशन-क्रियां कुर्यात्। तत्र कृत-नित्य-क्रियः पूर्व-वत् स-गणाधिप-गौर्यादिकं सम्पूज्य शुचि-नामानमग्निं संस्कृत्य प्रागुक्त-धारा-होमान्तं कर्म समाप्य पञ्चाहुतीर्जुहुयात्। यथा—'ह्लीं अग्नये स्वाहा, ह्लीं इन्द्राय स्वाहा, ह्लीं प्रजापतये स्वाहा, ह्लीं विश्वेभ्यो देवेभ्यः स्वाहा, ह्लीं ब्रह्मणे स्वाहा।' इति हुत्वा तत्रान्यस्मिन् गृहे वा बालकं क्रोडे कृत्वा पञ्च-प्राणाहुति-मन्त्रैः पायसं पञ्चधा भोजयित्वा शिशोर्मुखे किञ्चिदन्न-व्यञ्जनादि दत्वा आचामयेत्। ततो गीत-वाद्य-पुरःसरं प्रायश्चित्त-होमादि समापयेदित्यन्नप्राशनम्।

### चूड़ाकरण-प्रयोगः

अथ चूड़ाकरणम्—तृतीये वर्षे पञ्चमे कुलाचार-प्राप्ते वा चूड़ाकरणं। तत्र कृत-नित्य-क्रियः स-गणाधिप-मातृकादि-पूजां विधाय सत्य-नामानमग्निं संस्कृत्य धाराहुत्यन्तं कर्म समाप्याग्नेरुत्तरे तिल-गोधूम-सहितं वृष-गोमय-पूर्णं नव-शरावं स्थापयेत् कवोष्णं जलं शाणितं क्षुरं च। ततः पिता स्व-वामे जननी-क्रोड़े बालकं निधाय 'वं' इति दशधा जप्त्वा तेन कवोष्ण-तोयेन केशान् सम्मार्ज्य 'ह्लीं' इति मन्त्रेण कुश-पत्र-द्वय-निर्मित-जुष्टिकामेकां तत्र बध्नीयात्। ततो माया-लक्ष्मी-बीज-द्वयं त्रिधा जप्त्वा लौहजं क्षुरं गृहीत्वा सजुष्टिक-केशमुपमूलं छिन्द्यात्। ततः कुमार-माता तं सजुष्टि-केशं हस्ताभ्यां गृहीत्वा तस्मिन् गोमयान्वित-नव-शरावे स्थापयेत्। ततः पिता नापिताय ब्रूयात्—'क्षुर-मुण्डे शिशोः क्षौरं सुखं साधय स्वाहा।' इति पठित्वा बालकं पश्यन् सत्य-नामाग्नौ 'ह्लीं प्रजापतये स्वाहा' इति त्रि-वारं जुहुयात्।

ततः कृत-क्षौरं स्नातं समलंकृतं स-माल्यं बालं वाम-भागे संस्थाप्य स्विष्टि-कृत-प्रायश्चित्त-होमं हुत्वा पूर्णाहुतिं दद्यात्। ततो 'ह्रीं शिशो ! ते विश्वकर्मा कुशलं कुरुताम्' इति पठित्वा स्वर्ण-मय्या राजत्या शलाकया वा शिशोः कर्ण-द्वये वेधं कल्पयेत्। ततो आपो हिष्ठेत्यादि-मन्त्रेण तमभिषिच्य शान्त्यादिकं कृत्वा दक्षिणां कुर्यादिति चूड़ाकरणम्।

गर्भाधानादि-चूड़ान्तं कर्म सर्व-जातिषु समानं, केवलं शूद्राणामिदं सर्वममन्त्रकमिति।

### उपनयन-प्रयोगः

गर्भाष्टमेऽष्टमेऽब्दे वा उपनयनं कर्तव्यमिति। षोडशाब्द-पर्यन्तमनुपनीतस्य बालस्य दैव-पैत्र्य-क्रियायां नाधिकारः। तत्र कृत-नित्य-क्रियः स-गणाधिप-मातृ-पूजादि-वृद्धि-श्राद्धान्तं कर्म कृत्वा कुशण्डिकोक्त-विधानेन समुद्भव-नामानमग्निं संस्थाप्य धारा-होमान्तं कर्म कृत्वा प्रातः कृताशनं शिखां विना मुण्डित-शिरसं सुस्नातं क्षौमाम्बर-धरं स्वलंकृतं बालं छाया-मण्डपमानीय वह्नि-समीपे स्व-वामे शुद्धासने उपवेशयेत्।

ततो 'ह्रीं ब्रह्मचर्यं कुरु' इति गुरुः। 'ह्रीं ब्रह्मचर्यं करोमी'ति शिष्यो ब्रूयात्। ततो गुरुस्तस्मै शिष्याय काषाये वाससी, कुश-मयीं मेखलां च दद्यात्। 'ह्रीं सुभगा मेखला शुभ-प्रदा स्याद्' इति पठित्वा शिष्यो मौनी तिष्ठेत्। 'ह्रीं यज्ञोपवीतं' इति मन्त्रं पठित्वा गुरुः शिष्याय कृष्णाजिन-युक्त-यज्ञोपवीतं दद्यात्। वेद-भेदे सूत्र-मानं तु प्रमाण-मध्ये अनुसन्धेयम्। पुनर्यज्ञोपवीत-मात्रं वंश-दण्डं च दद्यात् पालाशं च। ततो माया-पुटितापो-हिष्ठादि-मन्त्रेण त्रि-पत्र-कुशेन धृत-कायं वस्त्र-मेखलाजिन-यज्ञ-सूत्र-दण्डं शिष्यमभिषिच्य तोयेन तदञ्जलिं पूरयेत्। ततः सूर्यायाञ्जलिं दापयित्वा बालं 'ह्रीं तच्चक्षुः' इति मन्त्रेणादित्यं दर्शयेत्। ततो गुरुर्माणवक-हृदयं स्पृष्ट्वा 'ह्रीं मम व्रते ते' इति मन्त्रं पठित्वा 'किं नामासि ?' इति पृच्छेत्। ततः शिष्यः 'श्री अमुक-नामाहं त्वामभिवादये' इति वदेत्। ततः गुरुः 'कस्य त्वं ब्रह्मचारी ?' इति। शिष्यः 'भवतो ब्रह्मचार्यहम्।' ततो गुरुः 'इन्द्रस्य ब्रह्मचारी त्वमाचार्यस्ते हुताशनः।' इत्युक्त्वा 'ह्रीं प्रजापतये वत्स' इति मन्त्रेण माणवकं समर्प्य दक्षिणावर्त-योगेन वह्निं प्रदक्षिणी-कारयित्वा आसने उपवेशयेत्।

ततः शिष्येण स्पृष्टो गुरुः 'ह्लीं प्रजापतये स्वाहा, ह्लीं इन्द्राय स्वाहा, ह्लीं विष्णवे स्वाहा, ह्लीं ब्रह्मणे स्वाहा, ह्लीं शिवाय स्वाहा।' ततो मन्त्यादि-स्वाहान्तेन नाम्ना दुर्गा-लक्ष्मी-सुन्दरी-भुवनेश्वरीन्द्रादि-दश-दिक्पाल-भास्क-रादि-नव-ग्रहेभ्यः स्व-स्व-नाम्ना प्रत्येकं जुहुयात्। ततो माणवकं वाससा आच्छाद्य 'को वाश्रमस्ते तनय ! ब्रूहि किं ते मनोगतम् ?' ततो शिष्यो गुरु-पाद-द्वयं धृत्वा 'करोतु मामाश्रमिणं ब्रह्म-विद्योपदेशतः।' इति प्रार्थयमानस्य शिष्यस्य दक्ष-कर्णे त्रिधा प्रणवं संश्राव्य स-व्याहृतिकां सावित्रीं श्रावयेत्। अन्या ब्रह्म-विद्या। 'गायत्र्याः सदाशिव ऋषिरनुष्टुप् छन्दः, सावित्री देवता, मोक्षार्थे विनियोगः।' तदर्थं च ज्ञापयेत्।

ततो माणवको भिक्षां कुर्यात्। ततो गुरुः 'ह्लीं ब्रह्मचार्युक्त-वेशं' इति पठेत्। ततो माणवकः कषाय-वस्त्रं स-कृष्णाजिन-यज्ञ-सूत्रं मेखलां दण्डं भिक्षा-करण्डमर्जित-भिक्षां च गुरवे निवेद्य शुद्ध-यज्ञोपवीत-द्वयं शुक्ल-वस्त्र-द्वयं च परिधाय धृत-गन्ध-माल्य आचार्य-सन्निधौ तूष्णीं तिष्ठेत्। ततो गुरुः 'ह्लीं जितेन्द्रियः सत्यवादी' इत्यादि पठित्वा शिष्येण हावयेत्। यथा—'ह्लीं ॐ भूः स्वाहा, ह्लीं ॐ भुवः स्वाहा, ह्लीं ॐ स्वः स्वाहा' इत्यनेन। ततः स्विष्टिकृद्-होमादि-दक्षिणान्तं कर्म समापयेदित्युपनयनम्।

### विवाह-प्रयोगः

अथ विवाहः—तत्र कृत-नित्य-क्रियः पञ्च-देवता-पूजादि-वृद्धि-श्राद्धान्तं कर्म कृत्वा रात्रौ गीत-वाद्य-पुरःसरं वरं छाया-मण्डपमानीय पूर्वाभिमुख-मासने समुपवेशयेत्। ततो ब्राह्मणैः पुण्याहं वाचयित्वा 'ह्लीं साधु भवाना-स्ताम्' इति वरं पृच्छेत्। ततो वरः 'ह्लीं साध्वहमासे' इति वदेत्। 'ह्लीं अर्चयिष्यामो भवन्तं' इति वरं पृच्छेत्। 'ह्लीं अर्चय' इति वरो वदेत्। 'ह्लीं पाद्यं समर्पयामि' इत्यादिना पाद्यार्घ्याचमनीय-गन्ध-पुष्प-वस्त्रालङ्कार-यज्ञ-सूत्रैर्वरमभ्यर्च्य 'ह्लीं मधुपर्कं समर्पयामि' इति वर-हस्ते मधुपर्कं समर्पयेत्। ततो वरो मधुपर्कं गृहीत्वा वाम-हस्ते निधाय दक्षिण-हस्तानामिका-ङ्गुष्ठाभ्यां 'ह्लीं प्राणाय स्वाहा, ह्लीं अपानाय स्वाहा, ह्लीं समानाय स्वाहा, ह्लीं उदानाय स्वाहा, ह्लीं व्यानाय स्वाहा' इति मन्त्रेण तन्मधुपर्क-द्रव्यं पञ्चधा आघ्राय तत् पात्रमुदीच्यां दिशि स्थापयेत्। ततो वराय पुनराचम-नीयं दत्वा दाता दूर्वाक्षताभ्यां वरस्य दक्षिणं जानु स्पृष्ट्वा 'विष्णुरोम्

तत्सदद्य अमुके मासि अमुक-राशिस्थे भास्करे अमुके पक्षे अमुक-तिथौ अमुक-गोत्रः श्रीअमुक-देव-शर्मा अमुक-गोत्रस्यामुक - प्रवरस्यामुक-देव - शर्मणः प्रपौत्रं पुनर्गोत्राद्युल्लिख्यामुक-देव-शर्मणः पौत्रं पुनर्गोत्राद्युल्लिख्यामुक-देव-शर्मणः पुत्रं पुनर्गोत्रादि-द्वितीयान्तमुल्लिख्य श्रीअमुक-देव-शर्माणमर्चितं वरम्।' एवं गोत्र-प्रवर-नाम-षष्ठयन्तं प्रपितामह-पितामह-पित्रीणामुक्त्वा यथा-क्रमं प्रपौत्रीं पौत्रीं पुत्रीं चोक्त्वा अमुक-गोत्राममुक-प्रवरां श्रीअमुकी-देवीं ब्राह्म-विवाहेन दातुं भवन्तमहं वृणे' इति वदेत्।

वरस्तु 'ह्लीं वृतोऽस्मि' इति वदेत्। तदा 'यथा-विहितं विवाह-कर्म कुरु।' वरः 'ह्लीं यथा-ज्ञानतः करवाणि' इति। ततः स-वस्त्रालङ्कारां कन्यां छाया-मण्डपमानीय वर-सम्मुखे स्थापयेत्। ततो वर-हस्ते कन्या-हस्तं नियोज्य फल-रत्नादिकं दत्वा प्राग्-वत् सौर-मासाद्युल्लेखानन्तरं प्रपितामह-पितामह-पित्रीणां गोत्र-प्रवर-नाम-षष्ठयन्तमुल्लिख्य यथा-क्रमं प्रपौत्राय पौत्राय पुत्राय इत्युक्त्वा अमुक-गोत्राय अमुक-प्रवराय श्रीअमुक-देव-शर्मणे वराय इत्युच्चार्य कन्यायाश्च प्रपितामह-पितामह-पित्रीणां षष्ठयन्तं गोत्र-प्रवर-नामोल्लिख्य प्रपौत्रीं पौत्रीं पुत्रीं इति यथा-सम्भवमुच्चार्य अमुक-गोत्राममुक-प्रवरां श्रीअमुकी-देवीं कन्यां' इत्यन्तं त्रिरुच्चार्य एनामर्चितां साच्छादनालङ्कारां प्रजापति-देवताममुक-कामस्तुभ्यमहं सम्प्रददे।' इति वराय दद्यात्। वरः 'स्वस्ति' इति स्वीकुर्यात्।

ततः सम्प्रदाता 'धर्मे चार्थे च कामे च भवता भार्यया सह वर्तितव्यम्। वरो 'वाढ़म्' इत्युक्त्वा काम-स्तुतिं पठेत्। ततः सम्प्रदाता कन्या-जामातरौ 'ह्लीं प्रजापति-प्रसादेन' इत्यादि श्रावयित्वा वस्त्रेणाच्छाद्य सुमङ्गल-पुरःसरं वर-कन्ययोः परस्पर-मुखावलोकं कारयेत्। ततः काञ्चनादिकं वराय दक्षिणां दत्वा अच्छिद्रावधारणं कुर्यात्।

ततो वरस्तद् रात्रौ पर-दिवसे वा कुशण्डिकोक्त-विधानेन योजक-नामाग्निं संस्थाप्य प्राजापत्यं चरुं श्रपयेत्। ततो धारा-होमान्तं कर्म कृत्वा 'ह्लीं शिवाय स्वाहा; ह्लीं दुर्गायै स्वाहा; ह्लीं विष्णवे स्वाहा; ह्लीं ब्रह्मणे स्वाहा; ह्लीं इन्द्राय स्वाहा' इति जुहुयात्। ततो 'ह्लीं पाणिं गृह्णामि' इति मन्त्रं पठित्वा भार्यायाः पाणिं गृह्णीयात्। ततः कन्या हस्तस्थेन स्वामि-दत्तेन घृतेन भ्रात्राद्याहृत-लाजैः प्रजापतिमुद्दिश्य 'ह्लीं प्रजापतये स्वाहा' इति चतुर्धा

तु ततो दत्वा पाद्यमर्घ्यं निवेदयेत्—

ॐ पाद्यं सुवासितं देव ! सर्व-भूत-सुखावहम् । दूर-यात्राश्रम-हरं पाद्यं तत् प्रति-गृह्यताम् । पाद्यं नमः पाद-युगे स्वाहार्घ्यं शिरसि स्थितम् । मधुपर्कं स्वधान्ते तु पुनराचमनीयकम् । स्नानीयं च नमो ब्रूयात् पुनर्गन्धादिकं ततः । वस्त्रं यज्ञोपवीतं च नमोऽन्ते परिकल्पयेत् । अन्नं भक्ष्यं स्वधान्ते तु धूपं दीपं विधानतः । क्रमेण निक्षिपेत् तत्र देवाय विधिनामुना । अर्घ्य-पात्रे प्रदायार्घ्यं ततः शृणु वरानने ! अर्घ्योदकं भवेच्छंखे श्यामाक-यव-दूर्वके । नाना-गन्ध-समायुक्तं कुशांश्च तिल-सर्षपम् । विष्णु-क्रान्तां च यवकं षडर्घ्योऽयं प्रकीर्तितः । ॐ काण्डाच्चैव मन्त्रेण अर्घ्यं दद्याच्च साधकः । पाद्य-मन्त्रेण कुर्वीत तथा चाचमनीयकम् । ॐ नमः स्वाहा-समायुक्तं ब्रह्मत्व-फल-हेतवे । मया निवेदितं भक्त्या मधुपर्कं गृहाण मे । मूल-मन्त्रेण सर्वत्र ॐकारादि-नमोऽन्विते । छान्दसत्वान्न वर्ण-नाशः । ॐकारादि-नमोऽन्वितेन मूल-मन्त्रे-णेत्यर्थः ।

दध्ना च मधु-सर्पिभ्यां मधुपर्कः प्रकीर्तितः । यज्ञोपवीत-मन्त्रेण दद्याद् यज्ञोपवीतकम् । यज्ञोपवीत-मन्त्रस्तु—ॐ यज्ञोपवीतं परमं पवित्रं बृहस्पते-र्यत् सहजं पुरस्तात् । आयुष्यमग्रं प्रति-मुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः । ॐ नाना-रत्नैश्च घटितं विश्व-कर्मादि-निर्मितम् । सर्वाङ्ग-शोभाभरणं गृहाण फल-हेतवे । ॐ वनस्पति-रसोत्पन्नो गन्धाढ्यो गन्ध उत्तमः । आघ्रेयः सर्व-देवानां धूपोऽयं प्रति-गृह्यताम् । ॐ सुप्रकाशो महा-दीपः सर्वतस्तिमिरापहः । सबाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रति-गृह्यताम् ।

प्रदीपावलिभिः कुर्यान्निकटे धूप-दीपकौ । प्रक्षालनाय हस्तस्य पश्चात् पात्रं क्षिपेत् सुधीः । शातकुम्भ-प्रपूर्णेन मण्डपं रचयेत् सुधीः । गणेशं पूज-यित्वा च अर्कं विष्णुं शिवं शिवाम् । पूजयेद् विधिना तत्र घटे सर्व-समृद्धये । कूर्चमुष्टिं क्षिपेदादौ फड्-मन्त्रेण तु साधकः । तिलान् कुशान् सर्षपांश्च कूर्च-मुष्टिः प्रकीर्तिता । विकिरान् प्रक्षिपेत् तत्र सप्त सप्त शराणुना । विकिरा दीक्षायां वक्ष्यन्ते । शराणुना अस्त्र-मन्त्रेण । ततो गुरुः स वेद्यां तु गत्वा स्वस्यासने विशेत् ।

मेरु-तन्त्रे तृतीय-प्रकाशे—सञ्चिन्त्य मन्त्रेण मूर्तिमेवं तस्मिन् गुरूत्तमः । तस्यां मूर्तौ समावाह्य पूजयेदिष्ट-देवताम् । स्मृत्वा मूल-मनुं मन्त्री सम्यङ्

नाड़ी-मुखात् ततः। निर्गमस्य च चैतन्यं नासिकाग्र-विनिर्गतम्। अञ्जलौ मातृका-पद्मे महः पुष्पान्विते गुरुः। मस्तकान्तं समुत्थाप्य तस्यामावाहयेत् ततः। संस्थापनं सन्निधानं सन्निरोधं ततश्चरेत्। सम्मुखीकरणं चापि सकलीकरणं ततः। ततोऽवगुण्ठनं कार्यममृतीकरणं ततः। परमीकरणं कुर्यात् क्रमशः स्व-स्व-मुद्रया। क्रमाद् विदध्याच्च तत उपचारान् प्रकल्पयेत्। आसनादि प्रभूतानां उपचारान् प्रकल्प्य च। ततो मन्त्र-विधानेषु प्रोक्ताङ्गावरणान्यपि। पुनः पूर्वादि-काष्ठासु क्रमादस्त्रादिकान् यजेत्। लोक-पालान् मण्डलेषु कुम्भोपरि च तत्र वा। ऐरावतं पुण्डरीकं वामनं कुमुदाञ्जनौ। पुष्प-दन्तं सार्वभौमं सुप्रतीकं तदग्रतः। सर्वान्ते लोक-पालानां तदस्त्राणां प्रपूजनम्। इन्द्रादि-पूजनात् पूर्वं ब्राह्म्यादि-पूजनमपि।

तथा च विश्वसारे—अष्ट-दिक्षु चाष्ट-कुम्भान् क्वाथ-तोय-प्रपूरितान्। ब्राह्म्यादि-मातृकाः पूज्याः सर्व-तन्त्र-समन्विताः। ज्ञात्वा ज्ञान-विधानेन गन्ध-पुष्पान्नवारिभिः। दण्डं कमण्डलु-करमक्ष-सूत्राभयं तथा। बिभ्रती कनकच्छायां ब्राह्मी कृष्णाजिनोज्ज्वला ॥१॥ शूलं कपालं परशुं नृणां पोतं मनोहरम्। वहन्ती हेम-सङ्काशा ध्येया माहेश्वरी शुभा ॥२॥ अंकुशं दण्ड-खट्वाङ्गं पाशं च दधती करैः। ध्येया बन्धूक-सङ्काशा कौमारी शर्म-दायिनी ॥३॥ चक्रं घण्टां गदां खड्गं बिभ्रती सुमनोहरा। तमाल-श्यामला ध्येया वैष्णवी शर्म-दायिनी ॥४॥ मुषलं कर-वालं च खेटकं दधती हलम्। करैश्चतुर्भिर्वाराही ध्येया काल-घनच्छविः ॥ ५ ॥ अंकुशं तोमरं विद्युत् कुलिशं बिभ्रती करैः। इन्द्रनील-निभेन्द्राणी ध्येया सर्व-समृद्धिदा ॥६॥ शूलं कपालं नृ-शिरः कपालं दधती करैः। मुण्ड-स्रङ्-मण्डिता ध्येया चामुण्डा रक्त-विग्रहा ॥७॥ अक्ष-स्रजं बीजपूरं कपालं पङ्कजं करैः। वहन्ती हेम-सङ्काशा महा-लक्ष्मी हरि-प्रिया ॥८॥

मेरु-तन्त्रे—विधाय पूजामेवं हि धूप-दीप-निवेद्यकैः। कृते निवेद्ये च ततो मण्डलं परितः क्रमात्। प्रवालांकुर-पत्राणि स्थापनीयानि मन्त्रिणा। वेदिकाया दक्ष-भागे कृत्वा स्थण्डिलमुत्तमम्। संस्थाप्य वह्निं संस्कृत्य वैश्वदेवं समारभेत्। यथा-विधि ततस्तत्र गन्धाद्यैर्देवतां यजेत्। ततः प्रणव-पूर्वाभिर्हुत्वा व्याहृतिभिः पुरा। जुहुयान्मूल-मन्त्रेण पायसेन घृतेन च। पञ्च-विंशतिभिः पश्चाद् हुत्वा व्याहृतिभिः पुरा। सम्पूज्य तां चन्दनाद्यैः पीठ-मूर्तौ नियोजयेत्।

अग्निं विसृज्य शिष्टेन पायसेन बलिं हरेत् । पार्श्वदेभ्यश्चन्दनादि-पुष्पाक्षत-समन्वितम् । तत उत्थाप्य नैवेद्यं तत्-स्थलं शोधयेत् सुधीः । पुनर्यजेच्चोपचारैः पञ्चभिर्दर्शयेत् ततः । दर्पणं व्यजनं छत्रं चामरं मुख-वासकम् । सहस्रम् च जपेन्मन्त्री मूल-मन्त्रं समाहितः ।

विश्वसारे—जलं समर्घ्य विधिना तदा कुर्वीत मङ्गलम् । द्विज-स्त्रीणां ब्राह्मणानामाशीर्वादं प्रगृह्य च । जय-शब्दैर्ब्रह्म-शब्दैर्ब्राह्मणान् परितोष्य च । बन्धु-वर्गं प्रतोष्याथ अधिवासं ततो दिशेत् । मन्त्रेणानेन द्रव्येण क्रमेण देशिकोत्तमः । अधिवासं प्रकुर्वीत शिष्यस्य सावधानतः । ॐकारं पूर्वमुच्चार्य नमोऽन्तेन समर्पयेत् । ॐ भूरसीति च मन्त्रेण मृत्तिकां प्रक्षिपेत् ततः । ॐ गन्ध-द्वारां दुराधर्षां नित्य-पुष्टां करीषिणीम् । ईश्वरीं सर्व-भूतानां त्वामिहोपह्वये श्रियम् । गन्धं दद्याच्च विधिना मन्त्रेणानेन साधकः ।

ॐ प्रपर्वतस्य वृषभस्य पृष्टां वावश्चरन्तो शशि च इयानाता आववृत्तमदधागुदक्ता । अहिं व्रध्नमनुरीषमणा विष्णोर्विक्रमणमसि विष्णोर्विक्रान्तमसि विष्णोः क्रान्तमसि वैष्णवे त्वा ।

मन्त्रेणानेन विधिना शिलां दद्याद् विचक्षणः । धान्य-मन्त्रेण धान्यस्य दानं तन्त्रेषु सम्मतम्—ॐ काण्डात् काण्डात् प्ररोहन्तो पुरुषं पुरुषः पवि । एतान् दूर्वे प्रतनु सहस्रेण शतेन च । मन्त्रेणानेन देवेशि ! दूर्वां दद्याद् विधानतः ।

ॐ श्रीश्च तेति च मन्त्रेण पुष्पं दद्याद् विधानतः । ॐ या फलिनीति च मन्त्रेण फलं दद्याद् विचक्षणः । ॐ दधिक्राव्णोऽत्यकार्षं जिष्णोरश्वस्य वाजि वः । सुरभीनो मुखाकरत् प्रणतानंसितायत् । मन्त्रेणानेन तं ध्यात्वा अधिवासं समादिशेत् । ॐ घृतवती भुवना-नामभि श्रियोर्वी पृथ्वी-मधु-दुघे सुपेशसा । द्यावा-पृथिवी वरुणस्य धर्मणा विष्कभीते अजरे भूरि-रेतसा ।

मन्त्रेणानेन देवेशि ! दद्याच्छिष्यस्य मस्तके । ॐ स्वस्ति न इति मन्त्रेण स्वस्तिकं विनिवेदयेत् । ॐ सिन्धोरिव प्राध्वने सुघनासो वात-प्रमीयपतन्ती जिह्वा घृतस्य धारा अरुषो न वाजी-काष्ठाभिन्दर्न्नूर्मिभिः पिन्नमानः । इति मन्त्रेण सिन्दूरं दद्याच्च शिष्य-मस्तके ।

ॐ शङ्ख ! त्वं शङ्ख-पुण्यानां मङ्गलानां च मङ्गलम् । विष्णुना

विधृता नित्यं मम शान्ति-प्रदो भव ।—शङ्ख-स्पर्शन-मन्त्रोऽयं सर्व-तन्त्रस्य सम्मतः ।

ॐ समिधोऽञ्जनं कृदरं मतीनां घृतमग्ने मधु-मतं पिन्नमानः । वाजी-वहन् वाजिनं जात-वेदा देवानां वाक्षि-प्रियमादधन्त ।—मन्त्रेणानेन देवशि ! कज्जलं विनिसज्जयेत् ।

ॐ युञ्जन्ति ब्रध्न-मरुषं चरन्तं परि-तस्थुषः । रोचन्ते रोचना दिवि । रोचनां परितो दद्यान्मन्त्रेणानेन सुन्दरि !

ॐ अन्नपते अन्नस्य नो धेह्यन्नमीरस्य शुष्मिणः । प्रदातारं तार्ष ऊर्जं नो धेहि द्विपदेशं चतुष्पदे । विश्व-कर्मणे स्वाहा ।—मन्त्रेणानेन देवेशि ! स्पर्शनं परि-कीर्तितम् ।

ॐ हिरण्य-गर्भः समवर्ततताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम वा ।—मन्त्रेणानेन देवेशि! काञ्चनं परितो न्यसेत् ।

ॐ रूपेण वै रूप-मर्त्यानां पृथोमा विश्व-वेदा विभजतुमुत्तमस्य पथा वेदश्चन्द्र-दक्षिणा-पश्यन्त्यन्तरीक्षं यत् सुषदुच्चैः ।—मन्त्रेणानेन देवेशि ! रूप्यं दद्याद् विधानतः ।

ॐ असौ यस्ताम्रोऽरुण उत बभ्रुः सुमङ्गलः । ये चैनं रुद्रा अभितो दिक्षु श्रिताः । सहस्रशो वै यां हेलषीमहे ।—मन्त्रेणानेन देवेशि ! ताम्रं दद्याद् विधानतः ।

ॐ रक्षोहनो बल्-गहनः प्रोक्षयामि वैष्णवान् रक्षोहनो बल्-गहनो बल-यामि वैष्णवान् रक्षोहनो बल्-गहनो वस्तृणामि वैष्णवान् रक्षोहनो बल्-गहन उप-दधामि वैष्णवं रक्षोहनो बल्-गहनः पर्यसामि वैष्णवीन् वैष्णवमसि वैष्णवाः स्थ ।—मन्त्रेणानेन सिद्धार्थं दत्वा बालस्य मूर्द्धनि ।

ॐ आकृष्णेन रजसा वर्तमानौ निवेशयन्नमृतं मर्त्यं च । हिरण्मयेन सविता रथेना देवो याति भुवनानि पश्यन् ।—मन्त्रेणानेन देवेशि ! दर्पणं प्रतिपादयेत् ।

ॐ मनो-ज्योतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोतु । अरिष्टं यज्ञमिमं दधातु विश्वे देवाः स इह मादयन्तामोम्प्रतिष्ठ ।—मन्त्रेणानेन देवेशि ! दीपं दद्याद् विधानतः ।

ॐ प्रतिपदसि प्रति-पदे त्वा अनु-पदसि अनु-पदे त्वा सम्पदसि सम्पदे त्वा तेजोऽसि तेजसे त्वा तेजोमयि धेहि। ॐ प्रशस्त-मात्रमसि भूत-पात्रे शिरसार्थं मम कुरु सर्वं देवी-चरण-युगलं वन्दनीयम्।

शारदा-तिलके चतुर्थ-पटले—अस्त्रेण क्षालिते पात्रे नवे ताम्र-मयादिके। तण्डुलान् शालि-सम्भूतान् मूल-मन्त्राभिमन्त्रितान्। प्रसृतीनां च दशभिः क्षिप्त्वा चास्त्र-मनुं जपेत्। प्रक्षाल्य पात्र-वदनं विधाय कवचामुना। प्राङ्-मुखो मूल-मन्त्रेण देशिकेन्द्रश्चरुं पचेत्। श्रुवेणाज्येन संस्विन्ने दद्यात् तप्ताभि-मारणम्। मूलेन पश्चात् तत्पात्रं कवचेनावतारयेत्। अस्त्र-जप्ते कुशास्तीर्णे मण्डले विधि-वद् गुरुः। तं विभज्य त्रिधा भागमेकं देवाय कल्पयेत्। अन्यदग्नौ च जुहुयादपरं देशिकः स्वयम्। शिष्येण सार्द्धं भुञ्जीत विहिताचमनं ततः। आचान्तं शिष्यमादाय सकलीकृत्य देशिकः। ताल-प्रमाणं हृज्जप्तं क्षीरि-वृक्षादि-सम्भवम्। दन्त-काष्ठं तदा दद्याच्छिष्याय नियतात्मने। दन्तान् विशोध्य स पुनस्तत् प्रक्षाल्य विसर्जने। यथा-विधि तमाचान्तं शिखा-बन्धाभिरक्षितम्। विधाय सार्द्धममुना वेद्यां दर्भान्तरे गुरुः। शयीत तस्यां तां रात्रिमधिवासः समीरितः। विशेषस्तु मेरु-तन्त्रे तृतीय-प्रकाशे अनुसन्धेयः। इति अधिवास-विधिः।

## अंकुरारोपण-प्रयोगः

अथांकुरारोपण-प्रयोगः—तत्र दीक्षा-दिवसात् प्राक् नवमे सप्तमे पञ्चमे शुभे तस्मिन् वह्नि-मण्डप-प्रान्तरे पञ्च-हस्त-मितानि पञ्च-सूत्राणि पूर्व-पश्चिम-क्रमेण पातयित्वा दक्षिणोत्तर-क्रमेण द्वादशांगुलान्तरितान्येकादश-सूत्राणि पातयेत्, तेन चत्वारिंशत् कोष्ठा भवन्ति। तेषां बहिश्चतुरो वीथीर्मार्जयेत्। मार्जन-प्रकारश्च प्रथमं पूर्वस्य चतुष्कोष्ठात्मिकामेकां वीथीं, ततो दक्षिणस्यामष्ट-कोष्ठात्मिकामपरां, पश्चिमायां चतुष्कोष्ठात्मिकामन्यामुत्तरस्यामष्ट-कोष्ठात्मिकामितरां च मार्जयेत्। ततोऽन्तश्चतुष्कस्य पूर्व-पश्चिम-पार्श्वयोर्द्वे वीथ्यौ द्वि-कोष्ठात्मिके पुनर्मार्जयेत्। तेन मण्डले चतुष्कोष्ठात्मकं कोष्ठ-त्रयमवशिष्यते। ततश्चतुष्कोष्ठ-त्रयस्थानि द्वादश-पदानि प्रत्येकं चतुष्कोष्ठं श्वेतादिभी रजोभी रञ्जयेत्।

तत्र वायु-पदे श्वेतमाग्नेये पीतं, नैऋते अरुणमीशाने कृष्णम्। ततः श्यामलेन मार्जित-वीथीरापूरयेत्। तेषु पदेषु पालिका-पञ्च-मुखी-शरावाणां

सुप्रक्षालितं त्रिगुण-सूत्र-वेष्टितं शुष्क-गोमय-चूर्ण-वालुका-मृद्भिरुत्तरोत्तर-परिपूरितम्। हरि-ब्रह्म-रुद्र-स्वरूपं कृष्ण-वर्ण-व्रणादि-रहितं पश्चिमादि-क्रमेणाग्नि-कोणमारभ्येशान-कोण-पर्यन्तं प्रत्येकं चतुष्कोष्ठेषु स्थापयेत्। ततः पश्चिम-दिशि पालिका-चतुष्के विष्णुं, मध्ये पालिका-चतुष्के ब्रह्माणं, पूर्वस्यां शराव-चतुष्के रुद्रं ध्यात्वावाह्य पूजयेत्।

ततो वमिति मन्त्रेण विष्णु-विषये ॐ नमो भगवते वासुदेवायेति मन्त्रेण दुग्धेनाम्भसा च बीजानि प्रक्षाल्य बीजोपरि दातव्य-मन्त्रमष्टोत्तर-शतं जपेत्। ततः कङ्गौ स्कन्दं, निष्पावे वायुं, कुलत्थे वह्निमाढक्यां निर्ऋतिं, मुद्गे सोमं, तिले वैवस्वतं, शालौ प्रजापतिं, सर्षपेऽनन्तं, श्यामाके सूर्यं, माषे च वरुणं सम्पूज्य बीजानि मिश्रयित्वा तत्र सोमं पूजयित्वा प्राङ्-मुख उदङ्-मुखो वा—

ॐ त्रि-पञ्चकाय सर्वाय शङ्कराय शिवाय च। सर्व-लोक-प्रधानाय शाश्वताय नमो नमः।

इति मन्त्रेण तेषु पात्रेषु बीजानि निर्वपेत्। ततो हरिद्रा-चूर्ण-मिश्रित-जलेन गन्ध-मिश्रित-जलेन च तानि सिञ्चेत्। उक्त-प्रकार-जल-सेचनं सोम-पूजनं चाधिवास-दिन-पर्यन्तं प्रत्यहं कुर्यात्। ततो नूतन-वस्त्र-त्रयेण तानि पात्राण्याच्छाद्य प्रत्येक-रात्रिषु देवताभ्यो बलिं दद्यात्।

तत्र प्रथम-रात्रौ ॐ भूतेभ्यो नमः इति मन्त्रेण गन्ध-पुष्पे दत्वा लाज-तिल-दधि-शक्तुभिर्बलिं दद्यात्। ततः स्थान-मार्जनादि कुर्यात्। द्वितीय-रात्रौ ॐ पितृभ्यो नम इति गन्ध-पुष्पे दत्वा स-तिलान्न-तण्डुलैर्बलिं दद्यात्। तृतीय-रात्रौ ॐ यक्षेभ्यो नम इति गन्ध-पुष्पे दत्वा दधि-शक्तुर्बलिं दद्यात्। चतुर्थ-रात्रौ ॐ नागेभ्यो नम इति गन्ध-पुष्पे दत्वा नारिकेलोदक-शक्तु-पिष्टकैर्बलिं दद्यात्। पञ्चम-रात्रौ ॐ ब्रह्मणे नम इति गन्ध-पुष्पे दत्वा स-पङ्कजाक्षत-तण्डुलेन बलिं दद्यात्। षष्ठ-रात्रौ ॐ शिवाय नम इति गन्ध-पुष्पे दत्वा स-यूपान्न-बलिं दद्यात्। सप्तम-रात्रौ ॐ विष्णवे नम इति गन्ध-पुष्पे दत्वा गुडौदनेन बलिं दद्यात्। ततः पायसादिना लोक-पालेभ्यो बलि-दानम्। तत्र ईशान-पूर्वयोर्मध्ये ब्रह्मणे। नैर्ऋत-वरुणयोर्मध्ये अनन्ताय बलि-र्देयः। प्ररूढानंकुरानन्यो न पश्येत्। अशुभेषु अंकुरेषु शान्त्यादिकं कुर्यादित्यं-कुरारोपणम्।

## अधिवास-प्रयोगः

अथ अधिवास-प्रयोगः—तत्रादौ गुरुर्गृहं प्रविश्य चन्दनागुरु-धूपाद्यै-र्गृहं सुवासितं कृत्वा विघ्नान् विनाश्य ॐ सूर्यः सोम इत्यादि पठित्वा घट-स्थापनं कुर्यात्। तत् क्रमस्तु—ॐ भूरसीति भूमि-शोधनम् ॥१॥ ॐ धान्यम-सीति मन्त्रेण तत्र शुक्ल-धान्य-निक्षेपः ॥२॥ ॐ प्राण इति मन्त्रेण हस्त-प्रमाणस्य घटस्योदरे नव-रत्न-दानम् ॥३॥ ॐ आजिघ्र इत्यादि-मन्त्रेण तत्र तस्य स्थापनम् ॥४॥ ॐ आप्यायस्वेति मन्त्रेण घटोपरि जल-दानम् ॥५॥ ॐ धन्न नेति तदुपरि शाखा-दानम् ॥६॥ तदुपरि ताम्बूलस्य श्रीफलस्य च दानं कदली-फलस्य वा ॥७॥ ॐ श्रीश्च तेति तदुपरि पुष्प-दानम् ॥८॥ ततः स-फलं शालि-चूर्ण-युक्तं शरावस्य घटोपरि-निधानम् ॥९॥ ॐ वस्त्रं चेति क्षीर-शाखि-शाखा-सहित - वस्त्रार्पणम् ॥१०॥ जम्बू-पञ्चाशदोषधि-क्वाथेन घट-पूरणम् ॥११॥ इन्द्र-वल्ल्या घट-वेष्टनम् ॥१२॥ घटे सिन्दूर-दानम् ॥१३॥ ॐ स्थिरो भवेति दीक्षा-पर्यन्तं घटस्य स्थिरीकरणम् ॥१४॥

एवं घटं संस्थाप्य ॐ गुरुभ्यो नमः इति पठित्वा ॐ यजमानस्य पुण्याहमित्यादिना पुण्याहं वाचयित्वा ॐ स्वस्ति न इति स्वस्ति-वाचनं कृत्वा ॐ अस्त्राय फडिति भौमान् विघ्नाननिमेषाक्षि-दृष्टि-रूप-दिव्य-दृष्ट्या चतुर्दिशि दिव्यान् विघ्नानपसार्य ॐ भूताः प्रेता इति मन्त्रेण माष-भक्तेना-न्न यावकेनाजा-कर्ण-रक्तेन दुग्धेन मधुर-द्रव्येण वा बलिं रक्त-पुष्पेण तान् पूजयेत्। ततो हुमिति सप्त-कृत्वो जप्तेन विकिरेण सर्वान् विघ्नान् निःसार्य रमिति जल-धारया चतुर्दिक्षु वह्नि-प्राकारं कल्पयेत्।

ततो वामत्यूर्ध्वोर्ध्व-क्रमेण ताल-त्रयं दत्वा ॐ गुरुभ्यो नम एवं गुरु-पादुकाभ्यः परम-गुरुभ्यः परापर-गुरुभ्यश्च ऊर्ध्वोर्ध्व-क्रमेण वामे नत्वा दक्षिणे ॐ गणेशाय नमः, मध्ये इष्ट-देव्यै नमः इति प्रणमेत्। ॐ आवाहया-म्यहमित्यादिना गणेशं ध्यात्वा एह्येहीत्यादिना घटे आवाह्य सिन्दूर-रक्त-कुसुमादिना तं पूजयेत्। तत-क्रमस्तु—स्वागत-प्रश्नोत्तरानन्तरमासन-दानम्। ॐ पाद्यमिति पादयोर्नम इति पाद्य-दानम्। शङ्खोदक-श्यामाक-दूर्वा-कुश-तिल-सर्षपापराजिता-यव-रूप-षडङ्गार्घ्यं गन्ध-युक्तं शंखे निधाय। ॐ काण्डादिभिः स्वाहेति शिरस्यर्घ्य-दानम्। पाद्य-मन्त्रेणाचमनीय-दानम्।

ॐ नम इति दधि-मधु-घृत-रूप मधुपर्कस्य स्वधेति दानम् । मूल-मन्त्रेण स्वधेति पुनराचमनीय-दानम् । मूल-मन्त्रेण नम इति स्नानीय-दानम् । ॐ यज्ञोपवीतमिति यज्ञ-सूत्र-दानम् । ॐ नाना-रत्नैश्चेत्याद्याभरण-दानम् । मूलेन नम इति गन्ध-दानम् । मूलेन वौषडिति पुष्प-दानम् । वनस्पतीति धूप-दानम् । ॐ सुप्रकाश इति दीप-दानम् । मूलेन दीपावलिभिर्नम इति नीराजनम् । मूलेन निवेदयामीति नैवेद्य-दानम् । ततो प्रागुक्त-नमो गुरुभ्य इति वन्दनम् । इति गणेशं सम्पूज्य । एवं क्रमेणार्क-विष्णु-शिव-दुर्गा घटे पूजयेत् ।

तत ॐ फडिति मन्त्रेण तिल-कुश-सर्षप-रूप-कूर्च-मुष्टिं प्रक्षिपेत् । तत ॐ अस्त्राय फडिति सप्त-कृत्वः सञ्जप्य लाज-चन्दन-श्वेत-सर्षप-भस्म-दूर्वा-रूप-विघ्न-विनाशक-विकिर-प्रक्षेपं कुर्यात् । ततो गुरुर्वेदिकोपरि स्वीयासने उपविश्य मूलेन मूर्ति कल्पयित्वावाह्य आवाहन्यादि-मुद्राः प्रदर्श्यासनादि पुष्पान्तेनेष्ट-देवतां सम्पूजयेत् । ततोऽङ्गावरणादि सम्पूजयेत् । तत्-क्रमस्तु तन्त्रसारेऽनुसन्धेयः ।

ततोऽष्टसु दिक्षु अष्ट-कुम्भान् क्वाथ-तोय-प्रपूरितान् पूर्वोक्त-मन्त्रैः संस्थाप्य तेष्वष्ट-मातृका-ध्यानावाहन-पूर्वकं पूजयेत् । ततो दश-दिक्षु इन्द्रादि-लोकपालानैरावतादीनष्टौ गजान् वज्राद्यस्त्राणि सम्पूज्य धूप-दीपौ नैवेद्यं चेष्ट-देवतायै निवेद्य वेदिकाया दक्ष-भागे मण्डलं कृत्वांकुर-पात्राणि स्थापयेत। ततो दक्षिणे स्थण्डिलं कृत्वांकुरं संस्कृत्य तत्र देवतां सम्पूज्य ॐ भूः स्वाहा, ॐ भुवः स्वाहा, ॐ स्वः स्वाहा इति व्याहृतिभिर्घृतेन हुत्वा पायसेन मूल-मन्त्रेण पञ्च-विंशति-वारं जुहुयात् । पुनर्व्याहृतिभिर्हुत्वा गन्ध-पुष्पादिभिः सम्पूज्याग्निं विसृजेत् । ततोऽवशिष्ट-पायसेन पार्श्व-देवेभ्यो बलिं दद्यात् । ततो नैवेद्यमुत्थाप्य स्थान-मार्जनं कृत्वा पुनर्दशोपचारैरिष्ट-देवतां घटे सम्पूज्य दर्पणं चामरं व्यजनं छत्रं मुख-वासक-ताम्बूलं च दर्शयेत् । ततो मूल-मन्त्रं सहस्रधा जप्त्वा जपं समाप्य प्रणम्य ब्राह्मणान् परितोष्य मङ्गल-ध्वनि-नृत्य-गीत-पुरःसरमधिवासं कुर्यात् । यथा—

ॐ भूरसीति शिष्य-मस्तके मृत्तिका-स्पर्शनम् ॥१॥ ॐ गन्ध-द्वारा-मिति गन्धः ॥२॥ ॐ प्रपर्वतस्येति शिला ॥३॥ ॐ धान्यमसीति धान्यम् ॥४॥ ॐ काण्डादिति दूर्वा ॥५॥ ॐ श्रीश्च तेति पुष्पम् ॥६॥ ॐ याः फलिनीति

फलम् ॥७॥ ॐ दधीति दधि ॥८॥ ॐ घृतवतीति घृतम् ॥९॥ ॐ स्वस्ति न इति स्वस्तिकम् ॥१०॥ ॐ सिन्धोरिवेति सिन्दूरम् ॥११॥ ॐ शङ्खं त्वमिति शङ्खः ॥१२॥ ॐ समिध इति कज्जलम् ॥१३॥ ॐ यञ्जन्तीति रोचना ॥१४॥ ॐ अन्नेति सिद्धान्नम् ॥१५॥ ॐ हिरण्येति काञ्चनम् ॥१६॥ ॐ रूपेणेति रूप्यम् ॥१७॥ ॐ असौ य इति ताम्रम् ॥१८॥ ॐ रक्षोहन इति सिद्धार्थः ॥१९॥ ॐ आकृष्णेनेति दर्पणम् ॥२०॥ ॐ मनो ज्योतिरिति दीपः ॥२१॥ ॐ प्रतिपदेति प्रशस्त-पात्रम् ॥२२॥

सर्वाण्येतानि शिष्य-मस्तके दद्यात्। ततः फडिति मन्त्रेण प्रक्षालिते नवे पात्रे मूल-मन्त्राभिमन्त्रित-दश-प्रसृति-मित-शालि-तण्डुलान् कृत्वा हुमिति मन्त्रेण पात्र-वदनं प्रक्षाल्य चरुं पचेत्। सुस्विन्ने चरौ मूलेनाभिधारणं कुर्यात्। ततो हुमिति तत्-पात्रमवतार्य कुशास्तीर्णे मण्डले फडिति मन्त्रेण स्थापयेत्। तं चरुं त्रिधा विभज्य एकं देवाय दद्यात् अपरं वह्नौ जुहुयात्। अपरं भागं शिष्येण सार्द्धं गुरुर्भुञ्जीत। तत आचान्ताय शिष्यायाङ्ग-न्यासं कृत्वा स्थिताय द्वादशांगुलं दन्त-काष्ठं गुरुर्दद्यात्। शिष्यस्तु तेन दन्त-काष्ठेन दन्तान् संशोध्य तत् काष्ठं प्रक्षाल्य विसृजेत्। तत आचान्त-शिष्येन सार्द्धं वेद्यां दर्भ-संस्तरे तां रात्रिं गुरुः शयीतेत्यधिवास-विधिः।

॥ इति श्रीप्राण-तोषिण्यां द्वितीये धर्म-काण्डे अधिवास-रूप-पुष्प-कथनं नाम चतुर्थः परिच्छेदः ॥



# पञ्चमः परिच्छेदः

## दीक्षा-रूप फल-कथनम्

### दीक्षा-प्रकरणम्

अथ दीक्षा। विश्वसार-तन्त्रे—गुरोर्निमन्त्रणं कृत्वा परेद्युः साधकस्तदा। वस्त्रालङ्कार-वर्णाद्यैर्गोभिश्चैव विधानतः। ततः स्नात्वा विधानेन नद्यादौ साधकोत्तमः। विधानेन सङ्कल्पादिना तान्त्रिक-कर्मणि सङ्कल्पादौ सौर-मासोल्लेख उक्तः। पिच्छिला-तन्त्रे पञ्चम-पटले—सौरे मासि शुभा दीक्षा न चान्द्रे न च तारके। प्रयोगादीनि सर्वाणि सौरेणैव समाचरेत्।

विश्वसारे द्वितीय-पटले—अंकुरारोपणानन्तरम्। मातृकाः पूजयेत् तत्र गौर्याद्याः सर्व-सम्मताः। गणेशाद्याः पूजयेत् ताः क्षमस्वेति क्षमां वदेत्। मातृकाः पूर्वमुक्ताः। वसोर्धारा तदा देया सर्व-विघ्न-विनाशिनी। पूजयेत् परया भक्त्या राजोपरिचरं बुधः।

### तत्र वृद्धि-श्राद्धादिकम्

तथा नान्दीमुख-श्राद्धं कुर्याच्च विधिनामुना। पितरं पितामहं चैव तथैव प्रपितामहम्। जीवे पितरि तत् श्राद्धं कुर्यात् तत् पितृ-पूर्वकम्। मातामहं प्रमातामहं वृद्ध-प्रमातामहं ततः। षट्-पिण्डान् प्रक्षिपेद् देवि! तानुपास्य सुसाधकः। नाम-गोत्रानुरूपेण श्राद्धं कुर्याद् विधानतः। देवता-पूर्वकं श्राद्धं कुर्यान्नान्दीमुखं ततः। पुरोरवा साद्रवाश्च सर्व-कार्येषु देवता। नान्दीमुख-वसुः सत्या देवता परिकीर्तिता। सर्वं दैव-क्रमेणैव श्राद्धे दद्याज्जलादि च। यत्तु महानिर्वाण-तन्त्रे दशमोल्लासे—नान्दीमुखाश्च पितरो नान्दीमुख्यश्च च मातरः। पितामहादयोऽप्येवं मातामहादयोऽपि च। श्राद्धे नान्द्याभ्युदयिके समुल्लेख्या तथा—तत्रादौ देव-पक्षे तु वाक्यं शृणु शुचि-स्मिते! कालादीनि निमित्तानि वरानने! समुल्लिख्य ततः परम्। तत्तत्-कर्माभ्युदयार्थमुक्त्वा साधक-सत्तमः। पित्रादीनां त्रयाणां तु मात्रादीनां तथैव च। मातामहानां च मातामह्यादीनामपि प्रिये! षष्ठ्यन्तं कीर्तयेन्नाम गोत्रोच्चारण-पूर्वकम्। विश्वेषां चैव देवानां श्राद्धं पदमुदीरयेत्। कुश-निर्मितयोः पश्चाद् विप्रयोरहमित्यपि। करिष्ये परमेशानीत्यनुज्ञा-वाक्यमीरितम्। विश्वान् देवान् परित्यज्य पितृ-पक्षे तु पार्वति!

तथा मातामहस्यापि पक्षेऽनुज्ञा प्रकीर्तिता। इति मात्रादीनां मातामह्या-दीनां च श्राद्धमुक्तं तद् द्वादश-दैविक-श्राद्ध-परम्।

विश्वसारोक्त-वचनं तु आभ्युदयिक-श्राद्ध-परं। तदपि सामगानामेव। ऋग्वेद-यजुर्वेदयोस्तु नव-दैवत-श्राद्धमिति। एवं च द्वादश-दैवताभ्युदयिक-श्राद्धयोरुक्त-प्रमाण-दर्शनादिच्छा-विकल्पयति। विश्वसारे तथा—पुण्याहं वाचयित्वा तु सर्व-कार्यं समुद्दिशेत्। इति वृद्धि-श्राद्धम्।

तत्र पञ्च-देव-पूजा

पञ्च-देव-पूजापि तत्रैव—सर्वत्र सर्व-कार्येषु गणेश-घट-पूर्वकम्। गणेशं सवितारं च शिवां शिवमतः परम्। विष्णुं च पूजयेद् यत्नात् सर्व-कार्यार्थ-सिद्धये। लक्ष्मीं सरस्वतीं गङ्गां यमुनां च तथैव च। दिक्-पालान् दिग्गजान् देवानृषीन् विघ्न-वासिनीं ग्रहांस्ततः परम्। मास-राशि-तिथी-योगान् करणानि च पार्वति! पूजयेत् परमा भक्त्या सर्व-तन्त्र-समन्वितान्। दिक्-पालादि-पूजा पूर्वमुक्ता तद्-विशेषस्त्वग्रतोऽनुसन्धेयः। सम्प्रति ग्रह-पूजा-र्थमादौ ग्रह-मन्त्रा उच्यन्ते।

तत्र ग्रह-पूजा ग्रह-मन्त्रोद्धारः

ग्रह-यामले चतुर्थ-पटले—प्रणवो वह्निमारूढः शिव आस्येन्दु-संयुतः। मायायाः सप्तमः सर्गश्चतुर्वर्णो रवेर्मनुः। मन्त्रस्तु—ॐ ह्रां ह्रीं सः॥ १॥ प्रणवः क-चतुर्थस्तु स मनुः स्वर-विन्दुकः। हादि-वह्नि-समारूढश्चतुर्दश-स्वरान्वितः। विन्दू र-षष्ठः सर्गश्च इन्दोर्वेदार्णको मनुः। मन्त्रस्तु—ॐ घ्रौं श्रौं सः॥ २॥ तारः शिखि-समारूढः शिवो मुख-समन्वितः। विन्द्वाढ्यः पुटि-तानेन माषाहादिः ससर्गकः। पञ्च-वर्णात्मको देवि! भौमस्य कथितो मनुः। मन्त्रस्तु—ॐ ह्रां ह्रीं ह्रां सः॥३॥ तारो नाद-समारूढः सतुर्यः स-मनु-स्वरः। विन्दुरेतद् द्वयं भानोर्द्वि-चतुर्थार्णकस्तथा। पञ्च-वर्णात्मको देवि! बुध-मन्त्रः समीरितः। मन्त्रस्तु—ॐ ह्रौं ह्रौं ह्रां सः॥ ४॥ तारः क-दशमार्णश्च स-मनु-स्वर-विन्दुकः। एतत् त्रयं सूर्य-तुर्यो गुरोः पञ्चार्णको मनुः। मन्त्रस्तु—ॐ ज्रौं ज्रौं ज्रौं सः॥ ५॥ चन्द्रजादि-द्वितीयश्च दिन-नाथ-त्रितुर्यकः। चतुर्वर्णात्मको मन्त्रः शुक्रस्य कथितः प्रिये! मन्त्रस्तु—ॐ ह्रौं ह्रीं सः॥ ६॥ प्रणवो र-चतुर्थस्तु स-मनु-स्वर-विन्दुकः। एतद् द्वयं सूर्य-तुर्यश्चतुर्वर्णः शनेर्मनुः। मन्त्र-स्तु—ॐ शौं शौं सः॥ ७॥ मनु-स्वराढ्यो घ-तुर्यः सविन्दुस्तेन सम्पुटः। ख-

षष्ठो मुख-विन्द्वाढ्यो भानु-तुर्यास्तकः प्रिये ! चतुर्वर्णात्मको मन्त्रः श्रीराहोः समुदीरितः। मन्त्रस्तु—ॐ छौं छां छौं सः ॥ ८ ॥ तारो द-पञ्चमो वर्णो मनु-स्वर-नभोऽन्वितः। साम्य-विन्दुः ख-षष्ठार्णः सोष्ठावो विन्दुनाष्टमः। सूर्य-तुर्यो महेशानि ! केतोः पञ्चार्णको मनुः। मन्त्रस्तु—ॐ फौं फां फौं सः ॥९॥

ग्रह-पूजा-क्रमः

पूजा-क्रमस्तु—आदौ मन्त्रं समुच्चार्य पश्चात् द्रव्यमुदीरयेत। सम्प्र-दान-पदं पश्चात् त्यागात्मकं पदं ततः। इति रुद्रयामलीय-वचनानुसारेण मूल-मुच्चार्य एतत् पाद्यं ॐ सूर्याय ग्रहाय नम इत्यादिना पूजयेत्। सर्वेषामेव क्रमो ज्ञेयः।

ग्रह-पुरश्चरणादिकम्

प्रसङ्गात् तेषां पुरश्चरणादिकं लिख्यते। यथा ब्रह्म-यामले शिव-वाक्यम्—विगुणे तु ग्रहे देवि ! व्याधि-शत्रु-नृपार्दने। राष्ट्रोपप्लवने घोरे आयुषो नाश आगते। जाति-ध्वंसे कुलोच्छेदे सर्वनाश उपस्थिते। धन-पुत्रादि-कामे च कुर्याद् ग्रह-पुरस्क्रियाम्। दशोक्त-वर्ष-संख्येन सहस्रेण जपेन तु। पुर-श्चरणमुद्दिष्टं सर्वेषां व्योम-चारिणां। दशांशं जुहुयाद् वह्नौ त्रि-मध्वाक्त-समिद्-वरैः। कल्पोक्तैर्गन्ध-कर्पूर-मिश्रितेनोदकेन च। तर्पयेद् देवतां देवि ! तद्-दशांश-क्रमेण तु। अभिषिञ्चेत् तद्-दशांशं कर्पूर-वासितैर्जलैः। तद्-दशांश-क्रमेणैव कुर्याद् ब्राह्मण-भोजनम्। आद्यन्ते महती पूजा दक्षिणा विभ-वावधि। इति ग्रह-पुरश्चरणम्।

ग्रह-दानादिकम्

अतस्तत् साधकेनापि कर्तव्यं ग्रह-पूजनम्। अन्यथा ग्रह-दोषेण न कदाचित् फलं भवेत्। सर्वाणि साधनानीह कृत्वा भक्त्या विधानतः। ऐहिके फल-भाङ् न स्याद् विना हि ग्रह-पूजनम्। कथयामि समासेन ग्रह-साधनमुत्त-मम्। चन्द्र-तारानुकूलं हि दिनं ग्राह्यं विचक्षणैः। ये ग्रहाश्चाभवन् दुष्टा-स्तान् प्रयत्नेन पूजयेत्। वस्त्र-पुष्पाणि सर्वाणि तत्तद् वर्णानि दापयेत्। जुहु-यात् तु यथा-शक्ति ग्रहेष्विष्ट-प्रसिद्धये। तत्तद्-ग्रहोक्त-द्रव्याणि तेभ्यो दत्त्वा द्विजे दिशेत्।

ग्रह-दानं तु ग्रह-यामले षष्ठ-पटले। श्रीदेव्युवाच—दीन-बन्धो ! दया-सिन्धो ! यदि तुष्टोऽसि मां प्रति। आपद्-विनाशनं कर्म कृपया कथय

प्रभो ! ईश्वरोवाच—तैल-वर्ति-प्रपन्नस्य दीपस्य पवनात् प्रिये ! विनाशः स्याद् यथा तद्-वदकाले प्राण-संक्षयः । अत आपद्-विनाशाय दीर्घायुष्कत्व-हेतवे । सारमेकं प्रवक्ष्यामि यत्नाद् दानं समाचरेत् । तुला-दानं च यो दद्याद् ग्रह-विप्राय सुन्दरि! आपन्मुक्तो भवेत् सोऽपि भुवि सम्मोदते सुखम् ॥१॥ सुवर्णस्य तुलां दद्याद् ग्रह विप्राय यः प्रिये ! तस्य तुष्टः सुर-गुरुरायु-र्वृद्धि करोति सः । यस्तु रौप्य-तुला-दानं दद्याद् ग्रह-द्विजाय च । सन्तुष्टस्तस्य शुक्रः सन् संसृजेत् दीर्घ-जीवितम् ॥२॥ ग्रह-द्विजाय यो दद्यात् तुलां ताम्रस्य पार्वति ! संतुष्टो मङ्गलस्तस्य दीर्घायुष्ट्वं करोति हि ॥३॥ यो दद्याद् ग्रह-विप्राय पित्तलस्य तुलां प्रिये ! तस्य तुष्टो बुधः कुर्यादायुः पुष्टिं स-गौरवम् ॥४॥ ग्रह-विप्राय लौहस्य तुलां यस्तु प्रयच्छति । प्रीतः शनैश्चरस्तस्य विपुलायुः प्रयच्छति ॥५॥ सीसकस्य तुलां दद्यात् ग्रह-विप्राय यः प्रिये ! तस्याशु राहुः सुप्रीतः सौभाग्यायुः प्रयच्छति ॥६॥ यः खर्पर-तुलां दद्याद् ग्रह-विप्राय सुन्दरि ! सन्तुष्टो भगवान् केतुस्तस्यायुर्वर्द्धयेत् सुखम् ॥७॥ तुलां ताम्रस्य यो दद्याद् ग्रह-विप्राय सुन्दरि ! आदित्यस्तस्य सुप्रीतो दीर्घायुः परियच्छति ॥८॥ ग्रह-विप्राय यो दद्यात् तुलां कांस्यस्य सुन्दरि ! सन्तुष्टस्तस्य रात्रीशो विभूत्यायुः प्रयच्छति ॥ ९ ॥

वैदूर्यं नील-माणिक्ये पद्म-रागं च मौक्तिकम् । वज्रं परेशं गोमेदं तथा मरकतं प्रिये ! दद्यादुत्सृज्य विप्राय स्वयं च विभृयात् करे । इति ग्रह-दानम् ।

## ग्रह-कवचादिकम्

अथ ग्रह-कवचम् । अष्टादश-पटले—पार्वत्युवाच—श्रीशान ! सर्व-शास्त्रज्ञ देवताधीश्वर ! प्रभो ! अक्षयं कवचं दिव्यं ग्रहादि-दैवतं विभो ! पुरा संसूचितं गुह्यं सुभक्ताक्षय-कारकम् । कृपा मयि तवास्ते चेत् कथय श्री-महेश्वर ! श्रीशिव उवाच—शृणु देवि ! प्रियतमे ! कवचं देव-दुर्लभम् । यद् धृत्वा देवताः सर्वे अमराः स्युर्वरानने ! तव प्रीति-वशाद् वच्मि न देयं यस्य कस्यचित् ।

ॐ ह्रां ह्रीं सोः मे शिरः पातु श्रीसूर्य-ग्रह-भू-पतिः । ॐ घौं ग्लौं सोः मे मुखं पातु श्रीचन्द्रो ग्रह-राजकः । ॐ ह्रां ह्रीं ह्रां सः करौ पातु ग्रह-सेनापतिः कुजः । पायादथ ॐ ह्रौं ह्रौं ह्रां सः पादौ ज्ञो नृप-बालकः । ॐ ग्रौं ग्लौं ग्रौं सः कटिं पातु पायादमर-पूजितः । ॐ ह्रौं ह्रीं सः दैत्य-पूज्यो हृदयं

परिरक्षतु । ॐ शौं शौं सः पातु नाभिं मे ग्रह-प्रेष्यं शनैश्चरः । ॐ छौं छां छौं सः कण्ठ-देशं श्रीराहुर्देव-मर्दकः । ॐ फौं फां फौं सः शिखी पातु सर्वाङ्ग-मभितोऽवतु । ग्रहाश्चैते भोग-देहा नित्यास्तु स्फुटित-ग्रहाः । एतदंशांश-सम्भूताः पान्तु नित्यं तु दुर्जनात् । अक्षयं कवचं पुण्यं सूर्यादि-ग्रह-दैवतम् । पठेद् वा पाठयेद् वापि धारयेद् यो जनः शुचिः । स सिद्धिं प्राप्नुयादिष्टां दुर्लभां त्रिदशैस्तु याम् । तव स्नेह-वशादुक्तं जगन्मङ्गल-कारकम् । ऋषिः प्रोक्तो भैरवोऽस्य छन्दोऽनुष्टुप् प्रकीर्तितम् । श्रीसूर्यादि-ग्रहास्तत्र देवताः परिकीर्तिताः । सर्व-कामार्थ-संसिद्ध्यै विनियोगो मयोदितः । ग्रह-यन्त्रान्वितं कृत्वाऽभीष्टमक्षयमाप्नुयात् । इति ग्रह-यामले पार्वतीश्वर-सम्वादे जगद्-दुर्लभाक्षय-नाम-कवचम् समाप्तम् ।

## दीक्षादौ तिथि-पूजा

अथ तिथि-पूजा । गायत्री-तन्त्रे । श्रीमहादेव उवाच—तिथेर्ध्यानं विना देवि ! तिथेर्मन्त्रं तथैव च । अज्ञात्वा परमेशानि ! दिन-कृत्यं करोति यः । तस्य सर्वं भवेद् व्यर्थं दिन-कृत्यं वरानने ! या तिथिः सा महा-माया आद्या-मूर्तिर्जगन्मयी । कृष्ण-पक्षे कृष्ण-वर्णा शुक्ले चन्द्र-सम-प्रभा ।

## तिथि-ध्यान-मन्त्र-पूजादिकम्

द्वि-भुजां शुक्ल-रूपां च खेलत्खञ्जन-गामिनीं । द्वि-लोचनां शशि-कलां सिन्दूर-तिलकोज्ज्वलां । तप्त-हाटक-निर्माण-नानालङ्कार-भूषितां । दाड़िमी-वीज - सदृश - दशन - द्युति - शोभनां । ध्यायेत् प्रतिपदं देवीं जप - पूजा-विशुद्धये । मन्त्रो यथा…ग्रीं प्रतिपद्भ्यः स्वाहा ॥१॥

एवं द्वि-लोचनां शशि-कलां शुद्ध-स्फटिक-शोभनां । शुद्धाभरण-शोभा-ढ्यां शुक्ल-वस्त्र-परिच्छदां । नाना-कटाक्ष-संयुक्त-भ्रू-लता-परिशोभितां । सिन्दूर-तिलकोद्दीप्तां खञ्जनाञ्चित-लोचनां । द्वि-भुजां सुन्दराङ्गीं च किशोरीं नव-यौवनां । ध्यात्वा द्वितीयां चार्वङ्गि ! जपेन्मन्त्रं यथा शृणु । ऐं द्वितीयायै स्वाहा ॥२॥

शुक्ल-पद्म-प्रतीकाशां शुक्ल-वस्त्र-परिच्छदां । शुक्लाभरण-शोभाढ्यां पुण्डरीकोपरि-स्थितां । द्वि-लोचनां शशि-कलां सिन्दूर-तिलकोज्ज्वलां । कटाक्ष-विशिखोपेतां द्वि-भुजां तृतीयां भजेत् । ॐ ऐं तृतीयायै स्वाहा ॥३॥

चतुर्थीं शुक्ल-चार्वङ्गीं यज् ज्ञात्वा सिद्धितां व्रजेत् । कुन्द-पुष्प-समा-भासां द्वि-भुजां लोल-लोचनां । शुक्ल-वस्त्र-परीधानां शुक्लाभरण-भूषितां । सिन्दूर-तिलकोद्दीप्तां खञ्जनाञ्चित-लोचनां । ऐं हुं चतुर्थ्यै स्वाहा ॥४॥

पञ्चमीं शृणु चार्वङ्गि ! सर्व-सिद्धि-प्रदायिनीम् । यज् ज्ञात्वा परमेशानि ! तिथेः फलमवाप्नुयात् । शुद्ध-स्फटिक-सङ्काशां श्वेत-पद्मोपरिस्थितां । हास्य-युक्तां प्रसन्नास्यां कटाक्ष-विशिखोज्ज्वलां । कन्दर्प-धनुराकार-भ्रू-लता-परिशोभितां । द्वि-भुजां श्वेत-वर्णां च श्वेतालंकार-भूषितां । लोचन-द्वय-संयुक्तां सिन्दूर-तिलकोज्ज्वलां । मृणाल-सदृशाकार-बाहु-वल्ली-विराजितां । खेलत्-खञ्जन-गामीं च चारु-चूड़ा-विराजितां । ह्रीं ऐं ह्रीं पञ्चम्यै स्वाहा ।। ह्रीं ऐं ह्रीं विशेषः । श्रीपञ्चमी-दिने कर्तव्यं पूजनं महत् । निरीक्ष्य दक्षिण-नाथे यद्-ध्यान-पूजादिकं चरेत् । ध्यायेत् परम-यत्नेन पञ्चमी-तिथि-रूपिणीम् । ध्यात्वा पाद्यादिकं दत्वा प्रजपेद् दशधा मनुम् । ततस्तु पूजयेद् देवीं शारदां वाग्-विलासिनीम् ।।५।।

कुन्द-पुष्प-समाभासां द्वि-भुजां लोल-लोचनां । कटाक्ष-विशिखोद्दीप्तां सिन्दूर-तिलकोज्ज्वलां । दाड़िमी-वीज-सदश-दशन-द्युतिमुज्ज्वलां । शुक्लालङ्कार-सुभगां शुक्लासन-निवासिनीम् । शुक्ल-वस्त्र-परिच्छिन्नां शुक्ल-हार-विनोदिनीं । द्वि-भुजां चन्द्र-वदनां ध्यायेदात्म-विभूतये । ॐ ह्रीं षष्ठ्यै स्वाहा ।।६।।

शरच्चन्द्र-प्रतीकाशां द्वि-भुजां शशि-शेखरां । लोचन-द्वय-संयुक्तां खेलत्-खंजन-गामिनीं । सिन्दूर-तिलकोद्दीप्तामञ्जनाञ्चित-लोचनां । कटाक्ष-विशिखोपेतां भ्रू-लता-परिशोभितां । शुक्लासन-समासीनां शुक्लाभरण-भूषितां । शुक्ल - वस्त्र - परीधानां ध्यायेदात्म - विभूतये । ह्रीं ॐ सप्तम्यै स्वाहा ॐ ह्रीं ।।७।।

राका-चन्द्र-प्रतीकाशां द्वि-भुजां चन्द्र-शेखरां । पूर्ण-चन्द्र-मुख-श्रेणीं कुटिलालक-शोभितां । हास्य-युक्तां प्रसन्नास्यां श्वेत-वस्त्र-परिच्छदां । श्वेताभरण-शोभाढ्यां किशोरीं नव-यौवनां । माला-कटाक्ष-संयुक्तां भ्रू-लता-परिशोभितां । सिन्दूर-तिलकोद्दीप्तामञ्जनाञ्चित-लोचनां । क्रीं हुं ऐं अष्टम्यै स्वाहा ऐं हुं क्रीं ।।८।।

श्वेत-पद्म-प्रतीकाशां द्वि-भुजां लोल-लोचनां । दाड़िमी-वीज-सदृश-दन्त-पंक्ति-परिच्छदां । शुक्ल-पट्टाम्बर-धरां शुक्ल-वस्त्रोत्तरीयणीं । ललाटे पट्टिकां शुद्धां सिन्दूर-तिलकोज्ज्वलां । नानाभरण-दीप्ताङ्गीं पीत-गन्ध-प्रलेपितां ।

मुक्ता-वर्तुल-हारेण कम्बु-कण्ठ-सुशोभितां । नाना-माल्य-परिच्छिन्नां चित्र-राज-विराजितां । ॐ हुं नवम्यै स्वाहा हुं ॐ ॥९॥

मल्लिका-पुष्प-सङ्काशां द्वि-भुजां लोल-लोचनां । श्वेतासनोपविष्टां च श्वेतांशुक-परिच्छदां । श्वेताभरण-संयुक्तां श्वेत-गन्ध-विलेपनीं । सिन्दूर-तिलकोद्दीप्तामञ्जनाञ्चित-लोचनां । ऐं ॐ दशम्यै स्वाहा ॐ ऐं ॥ १०॥

केतकी-पुष्प-सङ्काशां भ्रू-लता-परिभूषितां । नाना-कटाक्ष-संयुक्तां मत्त-द्विरद-गामिनीम् । नानालङ्कार-सुभगां पीत-वस्त्र-परिच्छदां । पीत-गन्ध-प्रलिप्ताङ्गीं सिन्दूर-तिलकोज्ज्वलां । दाड़िमी-वीज-सदृश-दन्त-पंक्तिमनुत्तमां । द्वि-भुजां सुन्दरीं देवीं नमाम्यात्म-विभूतये । ॐ क्रीं ॐ एकादश्यै स्वाहा ॐ क्रीं ॐ ॥११॥

पीत-पद्म-समाभासां शुक्ल-वस्त्र-परिच्छदां । शुक्ल-चन्दन-सिक्ताङ्गीं द्वि-भुजां लोल-लोचनां । शुक्लाभरण-शोभाढ्यां शुक्लासन-समाश्रयां । दाड़िमी-वीज-सदृश-दशन-द्युति-शोभनां । सिन्दूर-तिलकोद्दीप्तां ललाट-पट्टिकां शुभां । ह्रीं ॐ ह्रीं द्वादश्यै स्वाहा ह्रीं ॐ ह्रीं ॥१२॥

रक्त-चन्द्र-प्रतीकाशां किशोरीं नव-यौवनां । रक्त-वस्त्र-परीधानां कुटिलालक-मण्डितां । द्वि-भुजां सुन्दरीं शुद्धां पूर्ण-चन्द्रमुख-प्रभां । द्वि-लोचनां चन्द्र-रेखां विष्णु-पूज्यां वृहत्-कटीं । सिन्दूर-तिलकोद्दीप्तामञ्जना-ञ्चित-लोचनां । नाना-कटाक्ष-संयुक्तां नाना-श्रृंगार-शोभनां । ध्यात्वा त्रयोदशीं देवीं प्रजपेन्मन्त्रमुत्तमम् । ॐ ऐं त्रयोदश्यै स्वाहा ऐं ॐ ॥१३॥

शुद्ध-स्फटिक-सङ्काशां हरिद्-वस्त्र-विनोदिनीं, नानालङ्कार-सुभगां पीत-माल्य-परिच्छदां । श्वेत-पद्म-समासीनां द्वि-भुजां लोल-लोचनां, कटाक्ष-विशिखोद्दीप्तां सिन्दूर-तिलकोज्ज्वलां । दाड़िमी - वीज -सदृश-दशन-द्युति-मुज्ज्वलां, कदम्ब-कोरकाकार-स्तन-द्वय-मनोहरां । हास्य-युक्तां प्रसन्नास्यां किशोरीं नव-यौवनां । क्रीं ॐ ह्रीं चतुर्दश्यै स्वाहा ह्रीं ॐ क्रीं ॥१४॥

सप्तम-पटले । श्रीमहादेव उवाच—पूर्णिमां श्रृणु चार्वङ्गि ! यया सिद्धि-मयो भवेत् । कोटि-विद्युल्लताकारां चतुर्बाहु-समन्वितां, पीतांशुक-परीधानां रत्न-हार-विराजितां । शङ्ख-कङ्कण-केयूर-नाना-श्रृङ्गार-भूषितां, रत्न-कुण्डल-संयुक्त-स्फुरद्-गण्ड-मनोहरां । त्रि-भङ्ग-ललिताकारां सिन्दूर-तिलकोज्ज्वलां, कटाक्ष-लक्ष-संयुक्तां भ्रू-लता-परिशोभितां । ह्लीं ॐ क्रीं ॐ पूर्णिमायै स्वाहा ॐ क्रीं ॐ ह्लीं ॥१५॥

एतत् ते कथितं देवि ! पूर्ण-मन्त्रं परात्परम् । एतास्तु तिथयो देवि ! शुक्ल-पक्षे वरानने ! कृष्ण-पक्षे महेशानि ! तिथयस्तु सुशोभनाः । नीलाञ्जन-चय-प्रख्याः किशोर्यो नव-यौवनाः । तासां ध्यानं प्रवक्ष्यामि सावधानावधारय । दलिताञ्जन-सङ्काशां पीतांशुक-परिच्छदां, पीत-गन्ध-प्रलिप्ताङ्गीं पीताभरण-भूषितां । पीत-पद्म-समासीनां किशोरीं नव-यौवनां, द्वि-लोचनां चन्द्र-रेखां द्वि-भुजां कोरक-स्तनीं । ललाट-पट्टिका-शुद्धां सिन्दूर-तिलकोज्ज्वलां, खेलत्-खञ्जन-गामीं च त्रिभङ्गि-ललिताकृतिम् । दाड़िम-बीज-सदृश-दशन-ज्योतिरुज्ज्वलां । कृष्ण-पक्षे महेशानि ! एतद् ध्यानं प्रशस्यते । सर्वासां परमेशानि! एकेन भवति प्रिये ! सर्वासां पूर्व-वन्मन्त्रममावास्यां बिना शिवे !

अमावास्या-मनुं देवि! शृणुष्व वर-वर्णिनि ! ॐ ह्रीं ह्रीं ॐ अमावास्यायै स्वाहा ॐ ह्रीं ह्रीं ॐ ।

## पक्ष-ध्यानादिकम्

अथ वक्ष्यामि सफलं पक्ष-ध्यानं वरानने ! शङ्ख-कुन्द-समाभासां नव-यौवन-संयुतां, चतुर्भुजां त्रि-नयनां मत्त-द्विरद-गामिनीं । ललाट-पट्टिका-मध्ये सिन्दूर - तिलक - स्थिति, भ्रमद्-भ्रमर-नीलाभामञ्जनाञ्चित-लोचनां । पीतांशुक-परीधानां कृष्ण-वस्त्रोत्तरीयिणीं, नानालङ्कार-सुभगां नील-पद्मोपरि-स्थितां । घूर्णायमान-नयनां नील-पद्म-विधारिणीं, सदा-षोडश-वर्षीयां कदम्ब-कोरक-स्तनीं । हीरक-द्युति-सङ्काश-दशन-ज्योतिरुज्ज्वलां, नाना-पुष्प-मयैर्हारैर्नाना-गन्ध-मयीं परां, प्रत्यहं भावयेद् देवीं शुक्ल-पक्ष-स्वरूपिणीं । ऐं ऐं क्लीं क्लीं शुक्ल-पक्षाय स्वाहा ऐं ऐं क्लीं क्लीं ।

कृष्ण-पक्षे महेशानि ! अधुना निगदामि ते । महा-मरकत-श्यामां चतुर्बाहु-समन्वितां, पीनोत्तुङ्ग - कुचां रम्यां चित्र-वस्त्र-विलासिनीं । नाना-शृङ्गार-वेशाढ्यां स्फुरच्चकित - लोचनां, सिन्दूर-तिलकोद्दीप्तामंजनाञ्चित-लोचनां । कन्दर्प-धनुराकार-भ्रू-लता-परिशोभितां, रत्न-हारेण सहितां नाग-हार-विराजितां । पीत-पद्म-समासीनां चित्र-चूड़ा-विराजितां, पीत-विद्युत्-समा-कान्त्युत्तरीय-वसनच्छविं । पूर्ण-चन्द्र-मुखीं देवीं कृष्ण-पक्ष-स्वरूपिणीं । ॐ ॐ कृष्ण-पक्षाय स्वाहा ॐ ॐ ।

## तिथि-पक्ष-मन्त्र-ध्यानादिकम्

श्रीशिव उवाच—तिथेर्ध्यानं तिथेर्मन्त्रं पक्ष-ध्यानं तथैव च । पक्ष-मन्त्रं तथा देवि ! दिवसे दिवसे सुधीः । प्रत्यहं कुरुते यस्तु तस्य सिद्धिरदूरतः ।

एतास्तु तिथयो देवि ! सूर्य-मण्डल-संस्थिताः। पक्ष-ध्यानं प्रथमतस्तिथि-ध्यानं ततः प्रिये ! पक्ष-मन्त्रं ततो जप्त्वा तिथि-मन्त्रं ततो जपेत्। ततः सिद्धिमवाप्नोति जप-पूजादिका च या। दिन-कृत्यं महेशानि ! यः करोति दिने दिने। पक्ष-पूजां प्रथमतः कृत्वा सिद्धिमवाप्नुयात्।

### तिथि-पूजाद्यकरणे दोषः

तिथि-पूजां विना देवि ! जप-यज्ञादिका क्रियाः। सर्व निष्फलतां याति आम-पात्रमिवाम्भसि। दिवसे-दिवसे देवि ! तिथिमासाद्य यत्नतः। प्रातः-काले ततो धीमान् तिथि-ध्यानं समाचरेत्। दशधा जपेन्मन्त्रं सूर्यं दृष्ट्वा प्रयत्नतः। तदा तिथि-फलं प्राप्य सर्वं पूजा-फलं लभेत्। एतत् तत्त्वमविज्ञाय आयुर्याति दिने दिने। तिथि-रूपा महा-देवी महा-माया जगन्मयी। ध्यान-मन्त्रं विना देवि ! सर्वेषां सिद्धि-नाशिनी। प्रत्यहं कुरुते यस्तु जप-ध्यानं तिथेः प्रिये ! गङ्गा-स्नान-फलं सोऽपि लभते नात्र संशयः। अश्वमेध-महा-यज्ञे व्यासो होता यदि प्रिये ! विफलमश्वमेधं हि तिथि-ध्यानं विना भवेत्। अमृतेनामृतं कृष्णे प्रीयन्ते देवताः क्रमात्। प्रथमां पिबते वह्निर्द्वितीयां तपनः कलाम्। विश्वदेवास्तृतीयां तु चतुर्थीं तु प्रजा-पतिः। पञ्चमीं वरुणश्चापि षष्ठीं पिबति वासवः। सप्तमीमृषयो दिव्या वसवोऽष्टौ तथाष्टमीम्। नवमीं कृष्ण-पक्षस्य पिबतीन्दुः कलामपि। दशमीं मरुतश्चापि रुद्र एकादशीं कलाम्। द्वादशीं तु कलां विष्णुर्धनदश्च त्रयोदशीं। चतुर्दशीं पशु-पतिः कलां पिबति नित्यशः। ततः पञ्चदशीं चापि पिबन्ति पितरः कलाम्।

### तिथि-कवचादिकम्

अथ तिथि-कवचम्—अस्य तिथीनां कवचस्य श्रीअश्वत्थामा-बलि-व्यास-हनुमद्-विभीषण-कृप-परशुरामाः ऋषयो, गायत्री छन्दः, श्रीमृत्यु-ञ्जय-शिवः देवता, धर्मार्थ-काम-मोक्षेषु विनियोगः।

पूर्वे पातु सदा नित्या क्रोङ्कारी प्रतिपत्-तिथिः, क्लीङ्कारी पातु मे नित्यं द्वितीया ब्रह्म-पूजिता। ऐङ्कारी पातु मे नित्यं तृतीया पश्चिमे परा, ब्लुङ्कारी पातु मे नित्यं चतुर्थी विष्णु-पूजिता। ब्लुङ्कारी पातु मे नित्यमूर्ध्वं-देहमहर्निशं, ह्लींकारीं पातु मे नित्यं पञ्चमी मुख-मण्डलं। श्रीङ्कारी पातु मे नित्यं षष्ठी-रूपा च पार्वती, स्त्रीङ्कारी सप्तमी पातु नित्यं मे नाभि-मण्डलं। हुङ्कारी चाष्टमी नित्यं कण्ठं मे पातु सर्वदा, श्रीङ्कारी नवमी नित्यं

स्वाधिष्ठानं सदाऽवतु । दशमी पातु मे नित्यं हस्त-युग्मं यथा तथा, एकादशी सदा पातु चाक्षि-युग्ममहर्निशम् । द्वादशी पातु मे नित्यं हस्त-युग्मं यथा तथा, त्रयोदशी महा-लक्ष्मीः क्षेत्र-स्थान-निवासिनी । त्रयोदशी पातु नित्यं हंस इत्यक्षरात्मिका, हङ्कारः पातु मे नित्यं पाद-युग्ममहर्निशं । सःकारः पातु मे नित्यं पादाग्रात् केश-मण्डलं, चतुर्दशी महा-माया सर्वत्र परिरक्षतु । स्वाकारश्चतुर्दशी नित्यानित्यं मे धन-सम्पदं । हाकारः पूर्णिमा नित्यं देहि मे आयु-वर्धनं । श्रीं हुँ ह्लीं स्वाहा सर्व-रूपा देवी तिथि-रूपा च मां परिरक्षतु सर्वदा । हूं ह्लीं अमावास्या सदा पातु दारान् पुत्र-परिच्छदं । ह्लीं हुं ह्लीं स्वाहा । कथितं कवचं देवि ! त्रैलोक्येषु च दुर्लभम्, इदं कवचमज्ञात्वा कवचान्यं पठेत् तु यः । अन्येषां कवचानां च तेजांसि हरते तिथिः, तस्माद् यत्नेन हे देवि ! तिथीनां कवचं पठेत् । ध्यानं मन्त्रं तथा स्तोत्रं कवचं च तथा प्रिये ! कलि-काल-मतं देवि ! पर-तत्वं विनिर्गतं । इति ते कथितं देवि ! सारात् सारं परात्परम् । इति श्रीवर्ण-विलास-तन्त्रे गणेश-जतुकर्ण-सुभगा-सम्वादे तिथि-कवचं समाप्तम् ।

मासादीनां ध्यानं तु कामधेनु-तन्त्रादावनुसन्धेयमत्र ग्रन्थ-गौरव-भिया न लिखितम् ।

### अकारादि-वर्णानां ध्यानादिकम्

अथ वर्णानां ध्यानादिकं वर्णोद्धार-तन्त्रोक्तम् । प्रणाम-मन्त्रस्तु सर्वत्र कामधेनु-तन्त्रोक्त इति । तद्-यथा—

केतकी-पुष्प-गर्भाभां द्वि-भुजां हंस-लोचनां, शुक्ल-पट्टाम्बर-धरां पद्म-माल्य-विभूषिताम् । चतुर्वर्ग-प्रदां नित्यं नित्यानन्द-मयीं परां, वराभय-करां देवीं नाग-पाश-समन्विताम् । एवं ध्यात्वा अकारं तु तन्मन्त्रं दशधा जपेत् ॥ अ ॥

ध्यानमस्याः प्रवक्ष्यामि षड्-भुजां रक्त-लोचनां । रत्न-कङ्कण-केयूर-हारोज्ज्वल-कलेवरां । सिद्धां सिद्धि - प्रदां सौम्यां सिद्ध - गन्धर्व - सेवितां । एवं ध्यात्वा सुर-श्रेष्ठां तन्मन्त्रं दशधा जपेत् ॥ आ ॥

धूम्र-वर्णां महा-रौद्रीं पीताम्बर-युतां परां । कामदां सिद्धिदां सौम्यां नित्योत्साह-विवर्द्धिनीं । चतुर्भुजां तु वरदां हरि-चन्दन-भूषिताम् । एवं ध्यात्वा ब्रह्म-रूपां तन्मन्त्रं दशधा जपेत् ॥ इ ॥

चतुर्भुजां रक्त-वर्णां रक्त-पुष्पोप-शोभितां। चारु-चन्दन-दिग्धाङ्गीं रक्त-पङ्कज-लोचनाम्। रक्त-चीर-परीधानां धर्म-कामार्थ-मोक्षदाम्। एवं ध्यात्वा सुर-श्रेष्ठां तन्मन्त्रं दशधा जपेत्॥ ई॥

पीत-वर्णां त्रि-नयनां पीताम्बर-धरां परां। द्वि-भुजां जटिलां भीमां सर्व-सिद्धि-प्रदायिनीं। एवं ध्यात्वा सुर-श्रेष्ठां तन्मन्त्रं दशधा जपेत्॥ उ॥

द्वि-भुजां शुक्ल-वर्णां च जटा-मुकुट-शोभितां। शुक्ल-माल्याम्बर-धरां चारु-चन्दन-भूषिताम्। चतुर्वर्ग-प्रदां नित्यां रक्त-पङ्कज-लोचनां। एवं ध्यात्वा तु तन्मन्त्रं दशधा जपमाचरेत्॥ ऊ॥

षड्-भुजां नील-वर्णां च नीलाम्बर-धरां परां। नानालङ्कार-भूषाढ्यां सर्वालंकृत-मस्तकां। भक्ति-प्रदां भगवतीं भोग-मोक्ष-प्रदायिनीं। एवं ध्यात्वा सुर-श्रेष्ठां तन्मन्त्रं दशधा जपेत्। पञ्च-प्राण-मयं वर्णं चतुर्ज्ञान-मयं तथा। रक्त-विद्युल्लताकारं ऋकारं प्रणमाम्यहं॥ ऋ॥

ध्यानमस्याः प्रवक्ष्यामि द्वि-भुजां पद्म-लोचनां। सन्तप्त-स्वर्ण-वर्णाभां सर्वालङ्कार-भूषितां। रक्त-पद्मेक्षणां देवीं रत्न-हार-विभूषिताम्। एवं ध्यात्वा सुर-श्रेष्ठां तन्मन्त्रं दशधा जपेत्। चतुर्ज्ञान-मयं वर्णं पञ्च-प्राण-मयं सदा। त्रिशक्ति-सहितं वर्णं प्रणमामि सदा प्रिये॥ ॠ॥

स्वर्ण-चम्पक-वर्णां च स्वर्णालङ्कार-विग्रहां। चतुर्भुजां त्रि-नयनां रक्त-चन्दन-चर्चिताम्। प्रणमामि सदा देवीं धर्म-कामार्थ-मोक्षदाम्। एवं ध्यात्वा ब्रह्म-रूपां तन्मन्त्रं दशधा जपेत्॥ ऌ॥

ध्यानमस्याः प्रवक्ष्यामि पीत-वर्णां चतुर्भुजां। पीताम्बर-परीधानां नानालङ्कार-मस्तकां। विचित्र- माल्याभरणां देव -दानव- सेवितां। चतुर्वर्ग-प्रदां नित्यां नित्योत्साह - विवर्द्धिनीं। एवं ध्यात्वा ब्रह्म - रूपां तन्मन्त्रं दशधा जपेत्॥ ॡ॥

रक्ताम्बर-परीधानां षड्-भुजां रक्त-लोचनां। विचित्राभरणां नित्यां चतुर्वर्ग-प्रदायिनीं। ईषद्-हास्य-मुखीं सौम्यां देव-गन्धर्व-सेविताम्। एवं ध्यात्वा ब्रह्म-रूपां तन्मन्त्रं दशधा जपेत्॥ ए॥

विचित्र-रूपिणीं देवीं विचित्राम्बर-धारिणीं। विचित्र-माल्याभरणां चतुर्बाहु-समन्वितां। नानालङ्कार-संयुक्तां चतुर्वर्ग-फल-प्रदाम्। देव-दानव-

गन्धर्वैः सेवितां मोक्ष-कांक्षिभिः । एवं ध्यात्वा ब्रह्म-रूपां तन्मन्त्रं दशधा जपेत् ।। ऐ ।।

रत्नालङ्कार-संयुक्तां पद्म-राग-प्रभां शुभाम् । शरत्-पूर्णेन्दु-वदनां विचित्र-वसनान्वितां । चतुर्भुजां त्रि-नयनां स्मेरास्यां नील-कुन्तलां । विद्युद्-दाम-समानाङ्गीं मुक्ता-पंक्ति-स्रजं भजे । एवं ध्यात्वा ब्रह्म-रूपां तन्मन्त्रं दशधा जपेत् ।। ओ ।।

चतुर्भुजां त्रि - नयनां जटा - मुकुट - मण्डितां । श्वेत-रोहित-पीतादि-पुष्प-हारोपशोभितां । सदा स्मेर-मुखीं सौम्यां चतुर्वर्ग-प्रदायिनीम् । एवं ध्यात्वा ब्रह्म-रूपां तन्मन्त्रं दशधा जपेत् ।। औ ।।

जवा-दाड़िम-पुष्पाभां द्वि-भुजां रक्त-लोचनां । रक्ताम्बर-परीधानां रक्तालङ्कार-भूषितां । चतुर्वर्ग-प्रदां सौम्यां वरदां नाग-शेखरां । एवं ध्यात्वा ब्रह्म-रूपां तन्मन्त्रं दशधा जपेत् ।। अं ।।

सन्तप्त-हेम-वर्णाभां सर्वालङ्कार-भूषितां । रत्न-यज्ञोपवीतां च रत्न-कङ्कण-राजितां । पूर्णेन्दु-वदनां सौम्यां तुरीय-कर-संयुतां । चन्द्र-सूर्याग्नि-रूपेण नयन-त्रितयान्वितां । साधकाभीष्टदां नित्यां धर्म-कामार्थ-मोक्षदां । एवं ध्यात्वा ब्रह्म-रूपां तन्मन्त्रं दशधा जपेत् ।। अः ।।

जवा-यावक-सिन्दूर-सदृशीं कामिनीं परां । चतुर्भुजां त्रि-नेत्रां च बाहु-वल्ली-विराजिताम् । कदम्ब - कोरकाकार - स्तन-युग्म-विराजिताम् । रत्न-कङ्कण- केयूर-हार- नूपुर-भूषिताम् । एवं ककारं ध्यात्वा तु तन्मन्त्रं दशधा जपेत् ।। क ।।

बन्धूक-पुष्प-सङ्काशां रत्नालंकार-भूषिताम् । वराभय-करां नित्या-मीषद्-हास्य-मुखीं पराम् । एवं ध्यात्वा खकारं तु तन्मन्त्रं दशधा जपेत् । गुण-त्रय-युतं देवि ! पञ्च-देव-मयं सदा । त्रिशक्ति-संयुतं वर्णं खकारं प्रणमाम्यहम् ।। ख ।।

दाड़िमी-पुष्प-संकाशां चतुर्बाहु-समन्विताम् । रक्ताम्बर-धरां नित्यां रक्तालंकार-भूषिताम् । एवं ध्यात्वा गकारं तु तन्मन्त्रं दशधा जपेत् । पञ्च-प्राण-मयं वर्णं सर्व - शक्त्यात्मकं प्रिये ! तरुणादित्य-संकाशां कुण्डलीं प्रणमाम्यहम् ।। ग ।।

मालती-पुष्प-वर्णाभां षड्-भुजां रक्त-लोचनां । शुक्लाम्बर-परीधानां शुक्ल-माल्य-विभूषितां । सदा स्मेर-मुखीं रम्यां लोचन-त्रय-राजितां । एवं ध्यात्वा घकारं तु तन्मन्त्रं दशधा जपेत् । निर्गुणं त्रिगुणोपेतं सदा त्रि-गोल-संयुतम् । सर्वगं सर्वदा शान्तं घकारं प्रणमाम्यहम् ॥ घ ॥

धूम्र-वर्णां महा-घोरां ललज्जिह्वां चतुर्भुजां । पीताम्बर-परीधानां साधकाभीष्ट-सिद्धिदां । एवं ध्यात्वा महा-रूपां तन्मन्त्रं दशधा जपेत् । सर्व-देव-मयं वर्णं त्रिगुणं लोल-लोचने! पञ्च-प्राण-मयं वर्णं ङकारं प्रणमाम्यहं ॥ङ॥

तुषार - कुन्द- पुष्पाभां नानालंकार-भूषिताम् । सदा षोडश-वर्षीयां वराभय-करां पराम् । शुक्ल-वस्त्रावृत-कटिं शुक्ल-वस्त्रोत्तरीयिणीं । वरदां शोभनां रम्यामष्ट-बाहु-समन्विताम् । एवं ध्यात्वा चकारं तु तन्मन्त्रं दशधा जपेत् ॥ च ॥

ध्यानमस्याः प्रवक्ष्यामि द्वि-भुजां तु त्रि-लोचनां । पीताम्बर-धरां नित्यां वरदां भक्त-वत्सलां । एवं ध्यात्वा छकारं तु तन्मन्त्रं दशधा जपेत् । त्रिबिन्दु-सहितं वर्णं सर्वेश्वर-संयुतम् । पीत-विद्युल्लताकारं छकारं प्रणमा-म्यहम् ॥ छ ॥

नानालंकार - संयुक्तैर्भुजैर्द्वादशभिर्वृताम् । रक्त - चन्दन - दिग्धाङ्गीं चित्राम्बर - विधारिणीं । त्रिलोचनां जगद्धात्रीं वरदां भक्त-वत्सलाम् । एवं ध्यात्वा जकारं तु तन्मन्त्रं दशधा जपेत् ॥ ज ॥

सन्तप्त-हेम-वर्णाभां रक्ताम्बर-विभूषिताम् । रक्त-चन्दन-लिप्ताङ्गीं रक्त-माल्य-विभूषिताम् । चतुर्दश-भुजां देवीं रत्न-हारोज्ज्वलां पराम् । एवं ध्यात्वा झकारं तु तन्मन्त्रं दशधा जपेत् ॥ झ ॥

चतुर्भुजां धूम्र-वर्णां कृष्णाम्बर-विभूषिताम् । नानालङ्कार-संयुक्तां जटा-मुकुट-राजिताम् । ईषद्-हास्य-मुखीं नित्यां वरदां भक्त-वत्सलां । एवं ध्यात्वा ञकारं तु तन्मन्त्रं दशधा जपेत् ॥ ञ ॥

मालती - कुन्द - पुष्पाभां पूर्ण-चन्द्र-निभेक्षणाम् । दश-बाहु-समायुक्तां सर्वालंकार-भूषिताम् । पर-मोक्ष-प्रदां नित्यां सदा स्मेर-मुखीं पराम् । एवं ध्यात्वा टकारं तु तन्मन्त्रं दशधा जपेत् ॥ ट ॥

पूर्ण-चन्द्र-निभां देवीं विकसत्-पंकजेक्षणाम् । सुन्दरीं षोडश-भुजां धर्म-कामार्थ-मोक्षदाम् । एवं ध्यात्वा ठकारं तु तन्मन्त्रं दशधा जपेत् ॥ ठ ॥

जवा-सिन्दूर-संकाशां वराभय-करां पराम्। त्रि-नेत्रां वरदां नित्यां पर-मोक्ष-प्रदायिनीं। एवं ध्यात्वा डकारं तु तन्मन्त्रं दशधा जपेत्। चतुर्ज्ञान-मयं वर्णमात्मादि-तत्व-संयुताम्। पीत-विद्युल्लताकारां डकारं प्रणमाम्यहम्॥ ड॥

रक्तोत्पल-निभां रम्यां रक्त-पंकज-लोचनाम्। अष्टादश-भुजां भीमां महा-मोक्ष-प्रदायिनीं। एवं ध्यात्वा ढकारं तु तन्मन्त्रं दशधा जपेत्। सदा त्रिगुण-संयुक्तमादि-तत्व-मयं सदा। रक्त-विद्युल्लताकारं ढकारं प्रणमाम्यहम्॥ ढ॥

द्वि-भुजां वरदां वन्द्यां भक्ताभीष्ट-प्रदायिनीं। राजीव-लोचनां नित्यां धर्म-कामार्थ-मोक्षदाम्। एवं ध्यात्वा णकारं तु तन्मन्त्रं दशधा जपेत्॥ ण॥

चतुर्भुजां महा-शान्तां महा-मोक्ष-प्रदायिनीं। सदा षोडश-वर्षीयां रक्ताम्बर-धरां पराम्। नानालंकार-भूषाम् वा सर्व-सिद्धि-प्रदायिनीं। एवं ध्यात्वा तकारं तु तन्मन्त्रं दशधा जपेत्॥ त॥

नील-वर्णां त्रि-नयनां षड्-भुजां वरदां पराम्। पीत-वस्त्र-परीधानां सदा सिद्धि-प्रदायिनीम्। एवं ध्यात्वा थकारं तु तन्मन्त्रं दशधा जपेत्। पञ्च-देव-मयं वर्णं पञ्च-प्राण-मयं सदा। तरुणादित्य-सङ्काशं थकारं प्रणमाम्यहम्॥ थ॥

चतुर्भुजां पीत-वस्त्रां नव-यौवन-संस्थिताम्। अनेक-रत्न-घटित-हार-नूपुर-शोभिताम्। एवं ध्यात्वा दकारं तु तन्मन्त्रं दशधा जपेत्। त्रिशक्ति-सहितं देवि! त्रिबिन्दु-सहितं सदा। आत्मादि-तत्व-संयुक्तं दकारं प्रणमाम्यहम्॥ द॥

षड्-भुजां मेघ-वर्णां च रक्ताम्बर-धराम् परां। वरदां शुभदां रम्यां चतुर्वर्ग-प्रदायिनीम्। एवं ध्यात्वा धकारं तु तन्मन्त्रं दशधा जपेत्॥ ध॥

दलिताञ्जन-वर्णाभां ललज्जिह्वां सुलोचनाम्। चतुर्भुजां चकोराक्षीं चारु-चन्दन-चर्चिताम्। कृष्णाम्बर-परीधानामीषद्-हास्य-मुखीं सदा। एवं ध्यात्वा नकारं तु तन्मन्त्रं दशधा जपेत्॥ न॥

विचित्र-वसनां देवीं द्वि-भुजां पंकजेक्षणाम्। रक्त-चन्दन-लिप्ताङ्गीं पद्म-माला-विभूषिताम्। मणि-रत्नादि - केयूर- हार- विग्रहाम्। चतुर्वर्ग-

प्रदां नित्यां नित्यानन्द-मयीं पराम् । एवं ध्यात्वा पकारं तु तन्मन्त्रं दशधा जपेत् ॥ प ॥

प्रलयाम्बुद-वर्णाभां ललज्जिह्वां चतुर्भुजाम् । भक्ताभय-प्रदां नित्यां नानालंकार-भूषिताम् । एवं ध्यात्वा फकारं तु तन्मन्त्रं दशधा जपेत् ॥ फ ॥

नील-वर्णां त्रि-नयनां नीलाम्बर-धरां परां । नाग-हारोज्ज्वलां देवीं द्वि-भुजां पद्म-लोचनाम् । एवं ध्यात्वा बकारं तु तन्मन्त्रं दशधा जपेत् । त्रिशक्ति-सहितं वर्णं विविधामृत-लेपिताम् । स्वयं कुण्डलिनीं देवीं सततं प्रणमाम्यहम् ॥ ब ॥

तड़ित्-प्रभां महा-देवीं नाग-कंकण-शोभिताम् । चतुर्वर्ग-प्रदां देवीं साधकाभीष्ट-सिद्धिदाम् । एवं ध्यात्वा भकारं तु तन्मन्त्रं दशधा जपेत् । त्रिशक्ति-सहितं वर्णं त्रिविन्दु-सहितं प्रिये ! आत्मादि-तत्त्व-संयुक्तं भकारं प्रणमाम्यहम् ॥ भ ॥

कृष्णां दश-भुजां भीमां पीत-लोहित-लोचनां । कृष्णाम्बर-धरां नित्यां धर्म-कामार्थ-मोक्षदाम् । एवं ध्यात्वा मकारं तु तन्मन्त्रं दशधा जपेत् । त्रिशक्ति-सहितं वर्णं त्रिविन्दु-सहितं सदा । आत्मादि-तत्त्व-संयुक्तं हृदिस्थं प्रणमाम्यहम् ॥ म ॥

धूम्र-वर्णां महा-रौद्रीं षड्-भुजां रक्त-लोचनां । रक्ताम्बर-परीधानां नानालंकार-भूषिताम् । महा-मोक्ष-प्रदां नित्यामष्ट-सिद्धि-प्रदायिनीं । एवं ध्यात्वा यकारं तु तन्मन्त्रं दशधा जपेत् । त्रिशक्ति-सहितं वर्णं त्रिविन्दु-सहितं सदा । प्रणमामि सदा वर्णं शक्तिमामोक्षमव्ययम् ॥ य ॥

ललज्जिह्वां महा-रौद्रीं रक्तास्यां रक्त-लोचनां । रक्त-वर्णामष्ट-भुजां रक्त-पुष्पोप-शोभिताम् । रक्त-माल्याम्बर-धरां रक्तालंकार-भूषिताम् । महा-मोक्ष-प्रदां नित्यामष्ट-सिद्धि-प्रदायिकाम् । एवं ध्यात्वा ब्रह्म-रूपां तन्मन्त्रं दशधा जपेत् । त्रिशक्ति-सहितं देवि ! आत्मादि-तत्त्व-संयुतम् । सर्व-तेजोमयं वर्णं सततं प्रणमाम्यहम् ॥ र ॥

चतुर्भुजां पीत-वस्त्रां रक्त-पंकज-लोचनाम् । सर्वदा वरदां भीमां सर्वालंकार-भूषिताम् । योगीन्द्र-सेवितां नित्यां योगिनीं योग-रूपिणीं । चतुर्वर्ग-प्रदां देवीं नाग-हारोप-शोभिताम् । एवं ध्यात्वा लकारं तु तन्मन्त्रं दशधा जपेत् ॥ ल ॥

कुन्द-पुष्प-प्रभां देवीं द्वि-भुजां पंकजेक्षणाम् शुक्ल-माल्याम्बर-धरां रत्न-हारोज्ज्वलां पराम्। साधकाभीष्टदां सिद्धां सिद्धिदां सिद्ध-सेविताम्। एवं ध्यात्वा वकारं तु तन्मन्त्रं दशधा जपेत् ॥ व ॥

चतुर्भुजां चकोराक्षीं चारु-चन्दन-चर्चिताम् । शुक्ल-वर्णां त्रि-नयनां वरदां च शुचि-स्मिताम्। रत्नालंकार-भूषाढ्य श्वेत-माल्योप-शोभिताम्। देव-वृन्दैरभिवन्द्यां सेवितां मोक्ष-कांक्षिभिः। एवं ध्यात्वा शकारं तु तन्मन्त्र दशधा जपेत् ॥ श ॥

शुक्लाम्बरां शुक्ल-वर्णां द्वि-भुजां रक्त-लोचनां । श्वेत-चन्दन-लिप्ताङ्गीं मुक्ता-हारोप-शोभितां । गन्धर्व-गीयमानां च सदानन्द-मयीं परां। अष्ट-सिद्धि-प्रदां नित्यां भक्तानन्द - विवर्द्धिनीम्। एवं ध्यात्वा षकारं तु तन्मन्त्रं दशधा जपेत्। त्रिशक्ति-सहितं वर्णमात्मादि-तत्त्व-संयुतम्। प्रणम्य सततं देवि ! हृदि भावय सुन्दरि ॥ ष ॥

करीष-भूषिताङ्गीं च साट्टहासां दिगम्बरीं। अस्थि-माल्याष्ट-भुजां वरदाम्बुजेक्षणाम् । नागेन्द्र-हार-भूषाढ्यां जटा-मुकुट-मण्डितां । सर्व-सिद्धि-प्रदां नित्यां धर्म-कामार्थ-मोक्षदाम्। एवं ध्यात्वा सकारं तु तन्मन्त्रं दशधा जपेत् ॥ स ॥

चतुर्भुजां रक्त-वर्णां शुक्लाम्बर-विभूषितां । रत्नालङ्कार-संयुक्तां वरदां पद्म-लोचनाम्। ईषद्-हास्य-मुखीं लोलां रक्त-चन्दन-चर्चितां। स्याद् दात्रीं च चतुर्वर्ग-प्रदां सौम्यां मनोहराम् । गन्धर्व-सिद्ध-देवाद्यैर्ध्यातामाद्यां सुरेश्वरीं। एवं ध्यात्वा हकारं तु तन्मन्त्रं दशधा जपेत् ॥ ह ॥

तन्मन्त्र-पुटितं कृत्वा मूल-मन्त्रं ततो जपेत्। इति सर्व-वर्णेषु ज्ञेयम्। अन्यथा निष्फलं ज्ञेयं जप-पूजादि-साधनम्। दीक्षा च निष्फला ज्ञेया तस्मात् कुर्यात् प्रयत्नतः। कृत्वा जपं प्रकुर्वीत यथोक्त-फलमाप्नुयात्। शैवे शाक्ते वैष्णवे च सर्व-तन्त्रेष्वयं विधिः। तन्मन्त्र-पुटितं मन्त्रं दशधा दशधा जपेत्।

### वर्ण-ध्यानाकरणे दोषः

दीक्षादौ गुरुणा सार्द्धं कर्तव्यं मन्त्र-शोधनम्। अन्यथा निष्फला दीक्षा जप-पूजादिकं च यत्। सद्-गुरुः संयतो नित्यं ध्यात्वाभ्यर्च्य जपादिकम्। गुरु-चैतन्य-मात्रेण चैतन्यं जनयेत् ततः। संस्कारं च शोधनं च सागमेन विशेषतः। तन्मन्त्र-पुटितं कृत्वा शतमष्टोत्तरं जपेत्।

दीक्षादौ गुरुणा पूर्वं कर्तव्योऽयं क्रमः सदा। पञ्चाशद्-वर्ण-मनुना पुटिता मनवः प्रिये ! चतुर्वर्ग-प्रदाः शान्ता यथोक्त-फलदाः सदा। अन्यथा निष्फला दीक्षा जप-पूजादि-साधनम् । विधिनानेन हीना या सा दीक्षा निष्फला भवेत् । इह दारिद्र्यमतुलमन्ते च निरयं व्रजेत् ।

दीक्षादौ गुरु-कर्तव्य-क्रम एव प्रयत्नतः । आद्यावसाने वर्णेन पुटितं प्रजपेन्मनुम् । शिष्यः प्रयत्नतो नित्यं कुर्यादेतं क्रमं प्रिये ! पूजादौ वा जपादौ वा अन्यथा विफलं भवेत् ।। इति वर्णानां ध्यानम् ।

अकारादि-वर्णानां पूजा-मन्त्र-कथनम्

एतेषां मन्त्रस्तु 'ॐ अकाराय नमः' इत्यादि द्रष्टव्यम् ।

।। इति श्रीप्राण-तोषिण्यां द्वितीये धर्म-काण्डे दीक्षा-रूप-फल-कथनं नाम पञ्चमः परिच्छेदः ।।



# षष्ठः परिच्छेदः

## नाना-विधा दीक्षा-कथनम्

### दीक्षादौ पूजा-क्रमं च

पञ्च-देवादि-वर्णान्त-पूजानां सर्वत्रोपयोगित्वेनादौ लिखितं सामान्यार्घ्य-स्थापनमन्तरमेव कर्तव्यम् ।

शारदायां चतुर्थ-पटले—आचम्य विधिना तत्र सामान्यार्घ्यं विधाय च। द्वारमन्त्राम्बुभिः प्रोक्ष्य द्वार-पूजां समाचरेत् । सामान्यार्घ्य-स्थापनं तु मण्डप-द्वार्येव । द्वार-पूजा तु अर्थ-काण्डेऽनुसन्धेया ।

रुद्र-यामले पूर्व-खण्डे द्वितीय-पटले—मेरुपृष्ठ ऋषिः प्रोक्तः सुतलं छन्द उच्यते । कूर्मो देवतासन-योगे विनियोगः प्रकीर्तितः । माया-वीजं समुच्चार्य कूर्मासनाय ते नमः । पार्ष्णि-घात-त्रयेणैव वारयेद् भूमि-विघ्नकान् । ताल-त्रयेणान्तरीक्षान् तथा विघ्नान् निवारयेत् ।

पिच्छिला-तन्त्रे पञ्चम-पटले—सौरे मासीत्यादि प्रागुक्तम् । विश्वसारे—क्षेत्राधिपं क्षेत्रपालं गृह-देवीं ततः परम् । गन्ध-पुष्पौ धूप-दीपौ नैवेद्यं च निवेदयेत् । एषां पूजां विलंघ्याथ नार्चयेद् देवतान्तरम् ।

शारदायां—पञ्च-गव्यार्घ्य-तोयाभ्यां प्रोक्षयेद् याग-मण्डपम् । चतुष्पथान्तां तच्छुद्धिं विदध्याद् वीक्षणादिभिः । वीक्षणं मूल-मन्त्रेण शरेण प्रोक्षणं मतम् । तेनैव ताड़नं दर्भैर्वर्मणाभ्युक्षणं मतम् । चन्दनागुरु-कर्पूरैर्धूपयेदन्तरं सुधीः । विकिरान् विकिरेत् तत्र सप्त-जप्ताच्छराणुना । लाज-चन्दन-सिद्धार्थ-भस्म-दूर्वा-कुशाक्षताः । विकिरा इति सन्दिष्टाः सर्वे विघ्नौघ-नाशनाः । सोम-शम्भोस्तु विशेषो राघव-भट्ट-धृतो यथा—विकिरान् शुद्ध-लाजान् वा सप्त-मन्त्राभि-मन्त्रितान् । अस्त्राद्भिः प्रोक्षितानेतान् कवचेनावगुण्ठितान् । नाना-प्रहरणाकारान् विघ्नौघ-विनिवारकान् । अस्त्र-जप्तेन दर्भाणां मुष्टिमामार्जयेच्च तत् । ईशस्य दिशि वर्धन्या आसनाय प्रकल्पयेत् । पुण्याहं वाचयित्वा तु ब्राह्मणानुपवेश्य च । उक्तेषु मण्डलेष्वेकं वेदिकायां समालि-

खेत् । विशेन्मृद्वासने मन्त्री प्राङ्-मुखो वाप्युदङ्-मुखः । बद्ध-पद्मासनो मौनी समाहितो जितेन्द्रियः । ऋजु-कायो जितेन्द्रिय इति मेरु-तन्त्रे पाठः ।

मङ्गलांकुर-पात्राणि स्थापयेद् दिक्षु देशिकः । मङ्गल-रूपाणि यान्यंकुर-पात्राणि उक्त-रीत्या उक्तानि तानि दिक्षु स्थापयेदित्यर्थः । कृताञ्जलि-पुटो भूत्वा वाम-दक्षिण-पार्श्वयोः । नत्वा गुरुं गणेशानं भूत-शुद्धिं समाचरेत् । कर-शुद्धिं समापाद्य कुर्यात् ताल-त्रयं ततः । ऊर्ध्वोर्ध्व-मन्त्र-मन्त्रेण दिग्-बन्ध-मपि देशिकः । तेन सोऽञ्जलितस्तेजो-रक्षां कुर्यात् समन्ततः । ऋषिश्छन्दो दैवतानि न्यसेन्मन्त्रस्य मन्त्र-वित् । आत्मनो मूर्ध्नि वदने हृदये च यथा-क्रमम् ।

प्रपञ्च-सारेऽष्टम-पटले—ऋषिर्गुरुत्वाच्छिरसैव धार्यश्छन्दोऽक्षरत्वाद् रसना-गतं स्यात् । धियावगन्तव्य-तया सदैव हृदि प्रविष्टा मनु-देवता च । विधाय मूल-मन्त्रेण प्राणायामं यथा-विधि । विदध्यान्मातृका-न्यासं मन्त्र-न्यासमतः परम् । अंगुष्ठादिष्वंगुलीषु न्यसेदङ्गैः सजातिभिः । अस्त्रं तत् ताल-योर्न्यस्य कुर्यात् ताल-त्रयादिकम् । दिशस्तेनैव बध्नीयाच्छोटिकाभिः समा-हितः । हृदादिषु च विन्यस्येदङ्ग-मन्त्रैस्ततः सुधीः । हृदयाय नमः पूर्वं शिरसे वह्नि-वल्लभा । शिखायै वषडित्युक्त्वा कवचाय हुमीरितम् । नेत्र-त्रयाय वौषट् स्यादस्त्राय फडिति क्रमात् । षडङ्ग-मन्त्रानित्युक्तान् षडङ्गेषु नियोज-येत् ।

अंसोरु-युग्मयोर्विद्वान् प्रादक्षिण्येन देशिकः । धर्मं ज्ञानं च वैराग्यमै-श्वर्यं न्यस्य तु क्रमात् । मुख-पार्श्व-नाभि-पार्श्वेष्वधर्मादीन् प्रकल्पयेत् । धर्मा-दयः स्मृताः पादाः पीठ-गात्राणि चापरे । अनन्तं हृदये पद्मसस्मिन् सूर्येन्दु-पावकान् । एषु स्व-स्व-कला न्यस्येन्नामाद्याक्षर-पूर्वकान् । सत्वादींस्त्रीन् गुणान् न्यस्येत् तथैवात्र गुरूत्तमः । आत्मानमन्तरात्मानं परमात्मानमत्र तु । ज्ञानात्मानं प्रविन्यस्य न्यसेत् पीठ-मनुं ततः । एवं देह-मये पीठे चिन्तयेदिष्ट-देवताम् ।

मुद्रां प्रदर्श्य विधिवदर्घ्य-स्थापनमाचरेत् । शङ्ख-मन्त्राम्बुना प्रोक्ष्य वामतो वह्नि-मण्डले । साधारं स्थापयेद् विद्वान् विन्दु-स्रुत-सुधा-मयैः । तोयैः सुगन्धि-पुष्पाद्यैः पूजयेत् तं यथा-विधि । आधारं पावकं शङ्खं सूर्यं तोयं निशाकरम् । स्मरेद् वह्न्यर्क-चन्द्राणां कलास्तास्तेष्वनु-क्रमात् । कलास्तु

प्रथम-काण्डे निरूपिताः। मूल-मन्त्रं जपेत् स्पृष्ट्वा न्यासे तस्याङ्ग-मन्त्र-वित्। हृन्मन्त्रेणाभि-सम्पूर्य हस्ताभ्यां छादयन्नपः। जपेद् विद्वान् यथा-न्यायं देशिको देवता-धिया। अस्त्र-मन्त्रेण संरक्ष्य कवचेनावगुण्ठ्य च। धेनु-मुद्रां समापाद्य बोधयेत् स्व-स्व-मुद्रया। दक्षिणे प्रोक्षणी-पात्रमाधायाद्भिः प्रपूरयेत्। किञ्चिदर्घ्याम्बु संगृह्य प्रोक्षण्यम्भसि योजयेत्। अर्घ्यस्योत्तरतः कार्यं पाद्यमाचमनीयकम्। आत्मानं याग-वस्तूनि मण्डलं प्रोक्षयेद् गुरुः। प्रोक्षणी-पात्र-तोयेन मनुनान्यदपि क्रमात्। न्यास-क्रमेण देहे स्वे धर्मादीन् पूजयेत् ततः। पुष्पाद्यैः पीठ-मन्त्रान्तं तस्मिंश्च पर-देवताम्। पञ्च-कृत्वः पुनः कुर्यात् पुष्पाञ्जलिमनन्य-धीः। उत्तमाङ्ग-हृदाधार-पाद-सर्वाङ्गके क्रमात्। विना नैवेद्यं गन्धाद्यैरुपचारैः समर्चयेत्। गुरूपदिष्ट-विधिना शेषमन्यत् समापयेत्। सर्वमेतत् प्रयुञ्जीत प्रोक्षणीस्थेन वारिणा। विसृज्य तोयं प्रोक्षण्याः पूरयेत् तत् यथा-पुरा। ततस्तन्मण्डलं मन्त्री गन्धाद्यैः साधु पूजयेत्। शालिभिः कर्णिका-मध्यमापूर्योपरि तण्डुलैः। अलंकृत्य पुनस्तेषु दर्भानास्तीर्य मन्त्र-वित्। कूर्चमक्षत-संयुक्तं न्यसेत् तेषामथोपरि।

मेरु-तन्त्रे चतुर्थ-प्रकाशेऽपि—पूरयेत् कर्णिकां पूर्वं शालिभिस्तण्डुलैस्ततः। दर्भान् न्यसेत्तदुपर्येषां साक्षतं कूर्चकं ततः। छिन्न-मूलाः कुशा दीर्घाः सप्त-विंशति-संख्यकाः। ब्रह्म-ग्रन्थि-युतास्त्वग्र-देशे कूर्च इहोच्यते। आधार-शक्तिमारभ्य पीठ-मन्त्र-मयं यजेत्। अधः कूर्च-शिलारूढां शरच्चन्द्र-निभ-प्रभाम्। आधार-शक्तिं प्रयजेत् पङ्कज-द्वय-धारिणीम्। मूर्ध्नि तस्याः समासीनं कूर्मं नीलाभमर्चयेत्। ऊर्ध्व-ब्रह्म शिलासीनमनन्तं कुन्द-सन्निभम्। यजेच्चक्र-धरं मूर्ध्नि धारयन्तं वसुन्धराम्। तमाल-श्यामलां तत्र नीलेन्दीवर-धारिणीम्। समर्चयेद् वसुमतीं स्फुरत्-सागर-मेखलाम्। तस्यां रत्न-मयं द्वीपं तस्मिंश्च मणि-मण्डपम्। यजेत् कल्पतरुं तस्मिन् साधकाभीष्ट-सिद्धिदम्। अधस्तात् पूजयेत् तस्य वेदिकां मण्डलोज्ज्वलाम्। पश्चादभ्यर्चयेत् तस्यां पीठं धर्मादिभिः पुनः। रक्त-श्याम-हरिद्रेन्द्र-नीलाभान् पाद-रूपिणः। वृषकेश-विभूतेन्द्र-रूपान् धर्मादिकान् यजेत्। गात्रेषु पूजयेत् तांस्तु नञ-पूर्वानुक्त-लक्षणान्।

आग्नेयादिषु कोणेषु दिक्षु मध्येऽम्बुजं यजेत्। आनन्द-कन्दं प्रथमं सम्विन्नालमनन्तरम्। सर्व-तत्त्वात्मकं पद्ममभ्यर्च्य तदनन्तरम्। मन्त्री प्रकृति-पत्राणि विकार-मय-केशरान्। पञ्चाशद्-वर्ण-बीजाढ्य-कर्णिकां पूजयेत् ततः।

क्लाभिः पूजयेत् सार्द्धं तस्यां सूर्येन्दु-पावकान् । प्रणवस्य त्रिभिर्भागैरथ सात्वादिकान् गुणान् । आत्मानमन्तरात्मानं परमात्मानमर्चयेत् । ज्ञानात्मानं च विधि-वत् पीठ-मन्त्रावसानकम् । पीठ-शक्तीः केशरेषु मध्ये च स-वरा-भयाः । हेमादि-रचितं कुम्भं मन्त्राद्भिः क्षालितान्तरम् । चन्दनागुरु-कर्पूर-धूपितं शोभनाकृतिम् । आवेष्टिताङ्गं नीरन्ध्रं तन्तुना त्रिगुणात्मना । अर्चितं गन्ध-पुष्पाद्यैः कूर्चाक्षत-समन्वितम् । नव-रत्नोदरं मन्त्री स्थापयेत् तार-मुच्चरन् । ऐक्यं सङ्कल्प्य कुम्भस्य पीठस्य च विधान-वित् । क्षीर-द्रुम-कषा-येण पलाश-त्वग्भवेन वा । तीर्थोदकैर्वा कर्पूर-गन्ध-पुष्प-सुवासितैः । आत्म-भेदेन विधि-वत् मातृकां प्रतिलोमतः । जपेन्मूल-मनुं तद्-वत् पूजयेद् देवता-धिया ।

शङ्खे यथाथाम्बु-सम्पूर्णे गन्धाष्टकमभीष्टदम् । विलोड्य पूरयेत् तस्मिन्नावाह्य सकलाः कलाः । दश वह्नेः कलाः पूर्वं द्वादश द्वादशात्मनः । षोडशापि च सोमस्य पश्चात् पञ्च-शतं कलाः । जपित्वा प्रतिलोमेन मूल-मन्त्रं च मन्त्र-वित् । समाहितेन मनसा ध्यायन् मन्त्रस्य देवताम् । प्राण-प्रतिष्ठां कुर्वीत तत्र तत्र विचक्षणः । कलात्मकं शङ्ख-संस्थं यथाथं कुम्भे विनिक्षिपेत् । पाशादि-त्र्यक्षरास्यान्ते स्यादमुष्य पदं पुनः । क्रमात् प्राणा इह प्राणास्तथा जीव इह स्थितः । अमुष्य सर्वेन्द्रियाणि भूयोऽमुष्य पदं वदेत् । वाङ्-मनो-नयन-श्रोत्र-घ्राण-प्राण-पदान्यथ । पश्चादिहागत्य सुखं चिरं तिष्ठन्तु ठ-द्वयम् । अयं प्राण-मनुः प्रोक्तः सर्व-जीव-प्रदायकः ।

पश्चादश्वत्थ-पनस-चूत-कोमल-पल्लवैः । इन्द्र-वल्ली-समाबद्धैः सुर-द्रुम-धिया गुरुः । कुम्भ-वक्त्रं पिधायास्मिंश्चषकं सकलीकृतम् । संस्थापयेत् फल-धिया विधि-वत् कल्प-शाखिनाम् । ततः कुम्भं निर्मलेन क्षौम-युग्मेन वेष्टयेत् । मूल-मन्त्रं समुच्चार्य सुषुम्ना-वर्त्मना सुधीः । संस्थापनं सन्निधानं सन्निरोधमनन्तरम् । सकलीकरणं पश्चाद् विदध्यादवगुण्ठनम् । अमृती-करणं कृत्वा कुर्वीत परमीकृतिम् । क्रमादेतानि कुर्वीत स्व-मुद्राभिः समाहितः । अथोपचारान् कुर्वीत मन्त्र-वित् स्वागतादिकान् । स्वागतं कुशल-प्रश्नं निगदे-दग्रतो गुरुः । पाद्यं पादाम्बुजे दद्याद् देवस्य हृदयात्मना । हृदयात्मना नम इति मन्त्रेण । अर्घ्यं दिशेत् ततो मूर्ध्नि शिरो-मन्त्रेण देशिकः । स्वधा-मन्त्रेण वदने दद्यादाचमनीयकम् । स्वधात्मना ततः कुर्यान्मधुपर्कं मुखाम्बुजे । तेनैव मनुना

दद्याददि्भराचमनीयकम् । गन्धाद्भिः कारयेत् स्नानं वाससी परि-धापयेत् । दद्याद् यज्ञोपवीतं च हाराद्याभरणैः सह । न्यास-क्रमेण मनुना पुटितैर्मातृका-क्षरैः । अभ्यर्च्य देवं गन्धाद्यैरङ्गादीन् पूजयेत् ततः । तत्र तत्र जलं दद्यादुपचा-रान्तरा । अङ्गानि लोक-पालान्तं यजेदावरणान्यपि । केशरेष्वग्नि-कोणादि हृदयादीनि पूजयेत् ।

षडङ्ग-पूजादि-क्रमस्तु गन्धर्व-तन्त्रे चतुर्थ-पटले—अग्नीशासुर-वायव्य-मध्ये दिक्षु च पार्वति! षडङ्ग-युवतीः पश्चात् पूजयित्वा विधानतः । नेत्रमग्रे दिशां वस्त्रं ध्यातव्यान्यङ्ग-देवताः । तुषार-स्फटिक-श्याम-नील-कृष्णारुणा-र्चिषः । वरदाभय-धारिण्यः प्रधानतो वर-स्त्रियः । पश्चादभ्यर्चनीयाः स्युः कल्पोक्तावृषयः क्रमात् । अन्ते यजेल्लोक-पालान् मूल-पारिषदान्वितान् । हेतिजात्यधिपोपेतान् दिक्षु पूर्वादितः क्रमात् । एवं सम्पूज्य विधि-वन्नैवेद्यान्तं ततो गुरुः । दक्षिणे स्थण्डिलं कृत्वा तत्राधाय हुताशनं ।

## तत्र होमादि-विधिः

संस्कृत्य विधि-वद् विद्वान् वैश्वदेव-मखं चरेत् । तत्र सम्पूज्य गन्धा-द्यैर्देवतामुक्त-विग्रहाम् । तारस्य व्याहृतिं हुत्वा मूल-मन्त्रेण मन्त्र-वित् । सर्पिष्मता पायसेन पञ्च-विंशति-संख्यया । हुत्वा व्याहृतिभिर्भूयो गन्धाद्यैः पुनरर्चयेत् । संयोजयित्वा पीठस्थ-मूर्तौ वह्निं विसर्जयेत् । अवशिष्टेन हविषा विकिरेत् परितो बलिम् । देवतायाः पार्षदेभ्यो गन्ध-पुष्पाक्षतान्वि-तम् । ततो निवेद्यमुद्धृत्य शोधयित्वा स्थलं पुनः । पञ्चोपचारैः सम्पूज्य दर्शयेच्छत्र-चामरे । कर्पूर-शकलोन्मिश्रं तांबूलं च निवेदयेत् । सहस्रावृत्य संजप्य मूल-मन्त्रमनन्य-धीः । तज्जप्तं सर्व-सम्पत्त्यै देवतायै निवेदयेत् । ततः शम्भोर्दिशि गुरुर्विकिरेत् पूर्व-सञ्चिते । हेम-वस्त्रादि-संयुक्तां घर्घरीं तोय-पूरिताम् । संस्थाप्य तस्यां सिंहस्थां खड्ग-खेटक-धारिणीम् । घोर-रूपां पश्चिमास्यां पूजयेदस्त्र-देवताम् । चलासनेन सम्पूज्य तामादाय गुरुः पुनः । रक्षेति लोकपालानां नाल-मुक्तेन वारिणा । देवाज्ञां श्रावयन्नन्तः परिवृत्ते प्रदक्षिणम् । अस्त्र-मन्त्रं समुच्चार्य यथा पूर्वं निवेशयेत् ।

## तत्राध्वादि-शोधन-विधिः

विलोक्य दिव्य-दृष्ट्या तं तच्चैतन्यं हृदम्बुजात् । गुरुरात्मनि संयोज्य कुर्यादध्व-विशोधनम् । तं शिष्यम् । उक्तं कलाध्वा तत्त्वाध्वा भुवना।ध्वेति

च त्रयम्। वर्णाध्वा च पदाध्वा च मन्त्राध्वेति पर-त्रयम्। निवृत्याद्याः कलाः पञ्च कलाध्वेति प्रकीर्तितम्। तत्त्वाध्वा बहुधा भिन्नः शैवाद्यागम-भेदतः। षट्-त्रिंशच्छैव-तत्त्वानि द्वा-त्रिंशद्-वैष्णवानि तु। चतुर्विंशति-तत्त्वानि मैत्राणि प्रकृतेः पुनः। उक्तानि दश तत्त्वानि सप्त च त्रिपदात्मनः। तत्त्वानि शैवान्युच्यन्ते—शिवः शक्तिः सदा-शिवः। ईश्वरो विद्यया सार्द्धं पञ्च शुद्धान्यमूनि तु। माया कालश्च नियतिः काल-विद्या पुनः स्मृता। रागः पुरुष एतानि शुद्धाशुद्धानि सप्त च। प्रकृतिर्बुद्ध्यहङ्कारौ मनो ज्ञानेन्द्रिया-ण्यथ। कर्मेन्द्रियाणि तन्मात्राः पञ्च भूतानि देशिकाः। एतान्याहुरशुद्धानि चतुर्विंशतिमागमे। शैवानामिति तत्त्वानां विभागोऽत्र प्रदर्शितः। जीवः प्राणो धियश्चित्तं ज्ञान-कर्मेन्द्रियाण्यथ। तन्मात्राः पञ्च भूतानि हृत्पद्मं तेजसां त्रयं। वासुदेवादयश्चेति तत्त्वान्येतानि शार्ङ्गिणः। पञ्च-भूतानि तन्मात्रा इन्द्रियाणि मनस्तथा। गर्वो बुद्धिः प्रधानं च मैत्राणीति विदुर्बुधाः। निवृत्ताद्याः कलाः पञ्च ततो विन्दुः कला पुनः। नादः शक्तिः सदा-पूर्वः शिवश्च प्रकृतिर्विदुः। आत्म-विद्या शिवः पश्चाच्छिवो विद्यात्मना पुनः। सर्व-तत्वं च तत्वानि प्रोक्तानि त्रिपदात्मनः। तत्त्वाध्वा कथितो ह्येवं तत्तदागम-वेदिभिः।

ईरितो भुवनाध्वेति भुवनानि मनीषिभिः। वर्णाध्वेति वदन्त्यर्णाना-दीक्षान्तान् मनीषिणः। वर्ण-सङ्घः पदाध्वा स्यान्मन्त्राध्वा मन्त्र-राशयः। क्रमादेतानध्वनः षट् शोधयेद् गुरु-सत्तमः। पदान्धुनान्धु-हृद्-भाल-मूर्द्धस्वपि शिशोः स्मरेत्। अन्धुर्गुद-स्थानम्। तत्र कृच्छ्रेण विधि-वत् तत स्पृशन् जुहुयाद् गुरुः। आचार्य कुण्डे संशुद्धैस्तिलैराज्य-परिप्लुतैः। शोधयाम्यमुम-ध्वानं स्वाहेति पृथगध्वनाम्। ताराद्यामाहुतीरष्टौ क्रमात् तान् विलयं नयेत्। शिवे शिवात् तान् संलीनान् जनयेत् सृष्टि-मार्गतः। विलोकयन् दिव्य-दृष्टया। तत् स्थितं तच्च चैतन्यं पुनः शिष्ये नियोजयेत्। स्रुचा पूर्णाहुतिं दत्वा मूल-मन्त्रेण देशिकः। नेत्रे शिष्यस्य बध्नीयान्नेत्र-मन्त्रेण वाससा। करे गृहीत्वा तत् शिष्यं कुण्डतो मण्डलं नयेत्। तस्यांजलिं पुनः पुष्पैः पूरयित्वा यथा-विधि।

कलसे देवता-प्रीत्यै क्षेपयेन्मूलमुच्चरन्। व्यपोह्य तं नेत्र-बन्धमासीनं दर्भ-संस्तरे। आत्म-याग-क्रमाद् भूयः संहृत्योत्पाद्य देशिकः। तत्तन्म-

न्त्रोदितान् न्यासान् कुर्याद् देहे शिशोस्तदा। पञ्चोपचारैः कुम्भस्थां पूजयित्वेष्ट-देवताम्। तस्य तन्त्रोक्त-मार्गेण विदध्यात् सकलीकृतिम्। मण्डलेऽलंकृते शिष्यमन्यस्मिन्नुप-वेशयेत्। नदत्सु पञ्च-वाद्येषु सार्द्धं विप्राशिषा गुरुः। विधि-वत् कुम्भमुद्धृत्य तन्मुखस्थान् सुर-द्रुमान्। शिशोः शिरसि विन्यस्य मातृकां मनसा जपन्। मूलेन साधितैस्तोयैः सिञ्चेद् रक्षार्थमञ्जसा।

अभिषेक-विधिः

अथाभिषेक-विधिः। वामकेश्वर-तन्त्रे पञ्चाशत्-पटले—अभिषेकस्तु द्विविधः शाक्तश्च पूर्ण एव च। अवधूतेन गुरुणा शाक्ताभिषेकमाचरेत्। किञ्चिज्जलं च कुम्भानां ब्रह्म-कुम्भे निवेशयेत्। आनीय ब्रह्म-कलसं सम्मुखे स्थापयेद् बुधः।

अभिषेक-फलं च

निरुत्तर-तन्त्रे सप्तम-पटले—श्रीशिव उवाच—अभिषेकश्च द्विविधो राज्ञो वा ज्ञानिनामपि। राजाभिषेके देवेशि! वैदिकीं च क्रियां चरेत्। ज्ञानिनामभिषेकं तु सर्वतन्त्रेषु गोपितम्। सर्व-शान्ति-करं पुण्यं सर्व-रोग-निवारणम्। धनदं कीर्तिदं च आयुर्वृद्धि-करं नृणाम्। सर्व-सौभाग्य-जननं महा-पातक-नाशनम्। सर्वाशा-पूरकं सर्व-मन्त्र-दोष-निवारणम्। सर्वार्थ-साधकं देवि! सर्व-तीर्थ-फल-प्रदम्। अभिचार-हरं सर्व-ग्रह-दोष-विनाशकम्। भूतावेशादि-शमनं डाकिनीनां भयापहम्। तेजोवृद्धि-करं देवि! बल-वृद्धि-करं परम्। तक्षकेणापि दंष्ट्रस्य विष-पीड़ा-विनाशकम्। तेजो - ह्रासे बल-ह्रासे बुद्धि-ह्रासे धन-क्षये। स्त्री-कृतेऽप्यपि दोषेषु शारीरे मानसे तथा। विकारे देशिकः कुर्यादभिषेकं विचक्षणः। असौभाग्ये च नारीणामभिषेकः प्रवर्तते। गुरुत्वं च लभेद् देवि! कर्मणाभिषेक-वर्त्मना। वैष्णवो ज्ञान-सम्पन्नः शैवश्चैव कुलेश्वरि! अभिषेकं प्रकुर्वीत शाक्तश्च कुल-भूषणः। मन्त्र-तन्त्रं च सर्वेषामभिषेकेण सिद्धयति। अभिषेकेण सर्वेषामधिकारो भवेद् ध्रुवम्।

अभिषेक-कृतो विप्रो ब्रह्मत्वं लभते ध्रुवम्। अभिषेक-कृतः क्षत्रो विप्र-धर्मत्वमागतः। वैश्यः क्षत्रियतां याति शूद्रो वैश्यत्वमागतः। अभिषेकेण सर्वेषां चतुर्णां वर्णतां त्यजेत्। ब्राह्मणस्य सुरा-पाने ब्राह्मण्यं त्यजते क्षणात्। अभिषेक-कृते विप्रे सुरा-पानं विधीयते। आगमः पञ्चमो वेदः कौलश्च पञ्चमाश्रमः।

शिवोऽपि पञ्चमो वर्णो महा-विद्यां जपेद् यतः। स्व-स्व-वर्णं परित्यज्य शिवत्वं च प्रजायते। अभिषेकं विना नैव ब्राह्मणः प्रपिबेत् सुराम्। प्रगृह्य सिद्ध-विद्यां च सङ्केतज्ञस्ततो भवेत्। सङ्केतज्ञः कुलाचारे त्वभिषेकं समाचरेत्। अभिषेक-कृतो मन्त्री कुल-पूजां समाचरेत्। कुल-पूजा-कृतो मन्त्री पितृ-भूमिं ततो व्रजेत्। पितृ-भूमि-कृतं स्थानमेकाकी विहरेत् तदा। एकाकी विहरेद् वीरः प्रान्तरे रात्रिपान्तरे। तत्र सिद्धिं लभेद् देवि! देवानामपि दुर्लभाम्। कुलाचारं विना देवि! मन्त्र-तन्त्रं न सिद्धयति। सिद्ध-विद्या कुलाचारे द्रव्यं सिद्धयति निश्चितम्। अभिषेक-सुरां दद्याद् कुल-कर्म युगे युगे। सुरां पीत्वा जपेद् विद्यां कालाधिप-विशेषतः।

विजयां चानुकल्पं च सुराभावे निवेदयेत्। आनन्देन विना भ्रंशो न च तृप्यन्ति देवताः। पञ्चमेनार्चयेत् कालीं कामाख्यायां विशेषतः। कामाख्यायां विशेषेण कालिका सिद्धिदा भवेत्। कुलाचारं विना नैव काली-मन्त्रश्च सिद्धयति। अभिषेकं विना देवि! कुल-कर्म करोति यः। तस्य पूजादिकं कर्म अभिचाराय कल्पते। अभिषेकं विना देवि! सिद्ध-विद्यां ददाति यः। तावत् कालं वसेद् घोरे यावच्चन्द्र-दिवाकरौ। ब्रह्मत्वं च हरित्वं च शिवत्वं च कुलेश्वरि! सर्व-सिद्धीश्वरत्वं च अभिषेकेण जायते। दिव्यो वीरश्च देवेशि! कुल-शक्ति-परायणः।

अभिषेकं चरेद् देवि! अधिवास-पुरःसरम्। वृद्धि-श्राद्धं ततः कृत्वा शिव-शक्तीः प्रपूजयेत्। गुरुं सम्पूज्य विधि-वत् स्वर्णालङ्कार-भूषणैः। ततः सङ्कल्प्य विधिना गुरूणां वरणं चरेत्। ततः पूजां चरेद् देव्याः पञ्चभैश्च पृथक् पृथक्। प्रणम्य सद्-गुरुं देवं देवीं च साधकेश्वरः। गुरु-पूजां विधायाथ देव्या ध्यान-परायणः। अभिषेकं विधायाथ शुचौ देशे च साधकः। शून्यागारे नदी-तीरे बिल्व-मूले त्रिपान्तरे। महा-त्रिपान्तरे वापि निर्जने पितृ-कानने। ग्रामे पलातके वापि पर्वते तटिनी-तटे। देवतायतने वापि स्थानं च परि-चिन्तयेत्। अष्टम-पटले—शिव-शक्ति पूजयित्वा स्थापयेद् घटमुत्तमम्। नातिह्रस्वं नाति-दीर्घं स्वर्ण-रौप्य-विनिर्मितम्। विशेषार्घ्यं स्व-यन्त्रे वा त्रिकोणे वापि विन्यसेत्।

गङ्गाद्याः सरितः सर्वाः समुद्राश्च सरांसि च। सर्वे समुद्राः सरितः सरांसि जलदा नदाः। ह्रदाः प्रस्रवणाःपुण्याः स्वः-पाताल-मही-गताः।

सर्व-तीर्थानि पुण्यानि घटे कुर्वन्ति सन्निधिम् । श्री-वीजेन प्रजप्तेन पल्लवं प्रति-पादयेत् । कूर्चेन फल-दानं स्यात् स्त्री-वीजेन स्थिराकृतिः । सिन्दूरं वह्नि-वीजेन पुष्पं प्रेतेन विन्यसेत् । मूलेन दूर्वां प्रणवैः कुर्यादभ्युक्षणं ततः । हुं-फट् स्वाहेति मन्त्रेण कुर्याद् दर्भेण ताडनम् । विचिन्त्य देवि ! पीठं तु तत्रावाह्य प्रपूजयेत् ।

अनेनैव विधानेन सर्व-कर्मसु सुन्दरि ! घटं संस्थापयेद् देवि ! षट्-कर्मसु विशेषतः । महा-पूजां चरेद् देवि ! षोडशैरुपचारकैः । गुरूणां च महा-पूजां शक्तीनां च ततः परम् । तत्-पश्चात् साधकानां च कुमारीणां चपूजनम् । कुमारीभ्यो बलिं दत्वा कुलजाभ्यो विशेषतः । अभिषेकं ततो देवि ! कुर्यात् स्व-गुरु-मार्गतः । स्व-तन्त्रोक्त-विधानेन मन्त्र-प्रोच्चारणेन च । चालयेत् तं घटं मन्त्री मन्त्रेणानेन देशिकः—ॐ उत्तिष्ठ ब्रह्म-कलश ! देवताभीष्ट-सिद्धिद ! सर्व-तीर्थाम्बु-पूर्णेन पूरयास्य मनोरथम् । ईशानेन्दु-स्मर-क्षौणी तदन्ते भुवनेश्वरी । मन्त्रेणानेन वादित्र-निर्घोषैश्चालयेद् घटम् । अभिषिञ्चेद् गुरुः शिष्यं यजमानं पुरोहितः । सिञ्चेदश्वत्थ-वृक्षोत्थैः पल्लवैर्भूत-सङ्गमे । सिञ्चेदौडुम्बरैर्मन्त्र - दोषे च करवीरजैः । यशोधनायुस्तेजः श्रीफल-कामेन चूतजैः । तुलसी-मंजरीभिश्च सर्व-पाप-क्षयार्थिभिः । सर्व-तीर्थ-फलावाप्त्यै शाक्तानां विल्व-पल्लवैः । अभिचारे नारसिंहैरभिषेकः प्रवर्तते । नारसिंह चुनियाहागड़ा इति यस्य प्रसिद्धिः । कुर्याद् दर्भैरगर्भैश्च दोषेषु स्त्री-कृतेष्वपि । असौभाग्ये च नारीणां दूर्वाभिरभिषेचनम् । सर्व-कार्येषु मन्त्राणां सिद्ध्यर्थं चूत-पल्लवैः । तस्याभिषेक-मन्त्रस्य दक्षिणामूर्तिः ऋषिः, अनुष्टुप् छन्दः, शक्तिर्देवता, सङ्कल्प-सिद्धि-प्राप्तये विनियोगः ।

अभिषेक-मन्त्राः

ॐ राज-राजेश्वरी देवी भैरवी काल-भैरवी । श्मशान-भैरवी देवी त्रिपुरानन्द-भैरवी । त्रिकूटा त्रिपुरा देवी तथा त्रिपुर-सुन्दरी । त्रिपुरेशी महा-देवी तथा त्रिपुर-कारिका । त्रिपुरा-नन्दिनी देवी तथैव त्रिपुरातनी । एतास्त्वामभिषिञ्चन्तु मन्त्र-पूतेन वारिणा ॥ १ ॥ छिन्नमस्ता महा-देवी तथा चैक-जटेश्वरी । तारा च जय-दुर्गा च शूलिनी भुवनेश्वरी । त्वरिताख्या महादेवी तथैव च त्रि-खण्डिका । नित्या च नित्य-रूपा च वज्र-प्रस्तारिणी तथा । एता० ॥२॥ अश्वारूढ़ा महेशानी तथा महिष-मर्दिनी । दुर्गा च वन-

दुर्गा च श्रीदुर्गा भग-मालिनी । तथा भगन्दरी देवी भग-क्लिन्ना तथा परा । सर्व-चक्रेश्वरी देवी तथा नील-सरस्वती । सर्व-सिद्धिकरी देवी सर्व-गन्धर्व-सेविता । उग्रतारा महा-देवी तथा दक्षिण-कालिका ।। एता०।। ३ ।। क्षेमंकरी महा-काली चानिरुद्ध-सरस्वती । मातङ्गिनी चान्नपूर्णा राज-राजेश्वरी तथा ।। एता० ।। ४।। उग्रचण्डा प्रचण्डा च चण्डोग्रा चण्ड-नायिका । चण्डा चण्डवती चैव चण्ड-रूपाति-चण्डिका ।। एता० ५ ।। उग्र-दंष्ट्रा महा-दंष्ट्रा शुभ-दंष्ट्रा कपालिनी । भीम-नेत्रा विशालाक्षी मङ्गला विजया जया ।। एता० ६ ।। मङ्गला नन्दिनी भद्रा कीर्तिर्लक्ष्मीर्यशस्विनी । पुष्टिर्मेधा शिवा साध्वी यशः शोभा जया धृतिः । श्रीनन्दा च सुनन्दा च नन्दिन्यानन्द-पूजिता । एता०।। ७ ।। विजया नन्दिनी भद्रा स्मृतिः शान्तिर्धृतिः क्षमा । सिद्धिस्तुष्टी रमा पुष्टिः श्रीवृद्धिश्चरतिस्तथा । दीप्तिः कान्तिर्यशो-लक्ष्मीरीश्वरी बुद्धिरेव च । शाक्री मायावती ब्राह्मी जयन्ती चापराजिता । अजिता मानवी श्वेता दितिश्चादितिरेव च । माया चैव महा-माया मोहिनी क्षोभिणी तथा । कमला विमला गौरी शरण्याम्बुधि-सुन्दरी । दुर्गा क्रियारुन्धती च घण्टाकर्णा कपालिनी । रौद्री काली च मायूरी त्रिनेत्रा चापराजिता । स्वरूपा बहु-रूपा च तथैव विग्रहात्मिका । चर्चिका चापरा ज्येष्ठा तथैव सुर-पूजिता । वैवस्वती च कौमारी तारा माहेश्वरी परा । वैष्णवी च महा-लक्ष्मीः कार्तिकी कौषिकी तथा । शिव-दूती च चामुण्डा मुण्ड-माला-विभूषिता । एता० ।। ८ ।। इन्द्रो वह्निर्यमश्चैव नैर्ऋतो वरुणस्तथा । पवनो धनदेशानौ ब्रह्मानन्तौ दिगीश्वराः ।। एते त्वाम० ९ ।। सम्वत्सरश्चायनौ च मासाः पक्षौ दिनानि च । तिथयश्चाभिषिञ्चन्तु मन्त्र-पूतेन वारिणा ।। १० ।। रविः सोमः कुजः सौम्यो गुरुः शुक्रः शनैश्चरः । राहुः केतुश्च सततमभिषिञ्चन्तु ते ग्रहाः ।। ११ ।। नक्षत्रं करणं योगः अमृतं सिद्धिरेव च । दग्धं पापं तथा भद्रा योगा वाराः क्षणास्तथा । वार-वेला काल-वेला दण्डा वृद्धादयस्तथा । अभिषिञ्चन्तु सततं मन्त्र-पूतेन वारिणा ।। १२ ।। असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्त-संज्ञकः । कपाली भीषणश्चैव संहारोऽष्टौ च भैरवाः । ।। अभि० १३ ।। डाकिनी-पुत्रकाश्चैव राकिणी-पुत्रकास्तथा । लाकिनी-पुत्र-

काश्चान्ये काकिनी-पुत्रकाः परे । शाकिनी-पुत्रका भूयो हाकिनी-पुत्रका-स्तथा । ततश्च यक्षिणी-पुत्रा देवी-पुत्रास्ततः परम् । मातॄणां च तथा पुत्रा ऊर्ध्व-मुख्याः सुताश्च ये। अधोमुख्याः सुता ये च उन्मुख्याश्च सुताः परे ॥ एते० ॥१४॥ ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥ एते० ॥१५॥ पुरुषः प्रकृतिश्चैव विकाराश्चैव षोडश । आत्मान्तरात्म-परम-ज्ञानात्मानः प्रकीर्तिताः । आत्मनश्च गुणा ये तु स्थूलाः सूक्ष्मास्तथापरे । एते० ॥ १६ ॥ वेदादि-वीजं हुं-वीजं स्त्री-वीजं मीन-केतनम् । शक्ति-वीजं रमा-वीजं माया-वीजं सुधाकरम् । चिन्ता-रत्नं मह्रा-वीजं नारसिंहं च शांकरम् । मार्तण्ड-भैरवं दौर्गं वीजं श्रीपुरुषोत्तमम् । गाणपत्यं च वाराहं काली-वीजं भयापहम् । एते त्वाम० ॥१७॥ गङ्गा गोदावरी रेवा यमुना च सरस्वती । आत्रेयी भारती चैव सरयूर्गण्डकी तथा । कर-तोया चन्द्र-भागा श्वेत-गङ्गा च कौशिकी । भोगवती च पाताले स्वर्गे मन्दाकिनी तथा । एता० ॥१८॥ भैरवी भीम-रूपश्च शोणो घर्घर एव च । सिन्धु-तोय-ह्लदाः पान्तु तथा पाताल-सम्भवाः । यानि कानि च तीर्थानि पुण्यान्यायतनानि च । तानि त्वाम० ॥ १९ ॥ जम्बु-द्वीपादयो द्वीपाः सागरा लवणादयः । अनन्ताद्यास्तथा नागाः सर्पा ये तक्षकादयः । एते० ॥२०॥ रतिश्च वल्लभा वह्नेर्वषट्-कूर्चमतः परम् । वौषट्-कारस्तु फट्कारमभिषिञ्चन्तु सर्वदा ॥२१॥ नश्यन्तु प्रेत-कूष्माण्डा राक्षसा दानवाश्च ये । पिशाचा गुह्यका भूता अभिषेकेण ताडिताः ॥२२॥ अलक्ष्मीः काल-कर्णी च पापानि सुमहान्ति च । नश्यन्तु चाभिषेकेण तारा-बीजेन ताड़िताः ॥२३॥ रोगाः शोकाश्च दौर्बल्यं दारिद्र्यं चित्त-विक्रिया । नश्यन्तु चाभिषेकेण वाग्बीजेनैव ताड़िताः ॥ २४॥ लोका-नुराग - त्यागश्च दौर्भाग्यमपि दुर्यशः । नश्यन्तु चाभिषेकेण मन्मथेनैव ताड़िताः ॥२५॥ तेजोह्रासो बल-ह्रासो बुद्धि-ह्रासस्तथैव च । नश्यन्तु चाभि-षेकेण शक्ति-बीजेन ताड़िताः ॥ २६॥ विषापमृत्यु-रोगश्च डाकिन्यादि-भयं तथा । घोराभिचाराः क्रूराश्च ग्रहा नागास्तथाऽपरे । नश्यन्तु चाभिषेकेण काली-बीजेन ताड़िताः ॥२७॥ नश्यन्तु चापदः सर्वाः सम्पदः सन्तु सुस्थिराः । अभिषेकेण शाक्तेन पूर्णाः सन्तु मनोरथाः ॥ २८ ॥

शारदायाम्—अवशिष्टेन तोयेन शिष्यमाचामयेद् गुरुः । ततस्तत् सकली-कुर्याद् देवतात्मानमात्म-वित् । आचम्य वाग्-यतो भूत्वा निषीदेत्

सन्निधौ गुरोः । देवतामात्मनः शिष्ये संक्रान्तां देशिकोत्तमः । पूजयेद् गन्ध-पुष्पाद्यैरैक्यं सम्भावयंस्तयोः ।

निरुत्तर-तन्त्रे—एवं संसिच्य शिष्यं तु पुनः पूजां समाचरेत् ।

मेरु-तन्त्रे तृतीय-प्रकाशेऽपि—अथ शिष्यं चाभिषिञ्चेदाशु सम्पदवाप्तये । कुम्भास्यस्थ-सुरद्रुम्र मूर्द्धन्यस्य शिशोर्गुरुः । अथ पञ्च-निनादैश्च विप्राशीर्वचनैः सहः । गृहीत्वाभ्यर्चितं पूर्वं करकं ह्यस-रूपिणम् । तत्तोयैरभिषिञ्चेत् तं रक्षायै देशिकोत्तमः । शिष्योऽपि तत्र सम्पूज्य गुरवे दक्षिणां ददेत् । गो-भूमि-शिष्य-सत्वं च रौप्य-रत्नानि पार्वति ! सर्वस्वं वा तदर्द्धं वा तदर्द्धं वापि दक्षिणाम् । दक्षिणैषा तु मन्त्र-ग्रहणानन्तरं यदि अभिषेकः क्रियते तदा कर्तव्या । अभिषेकानन्तरं चेन्मन्त्र-ग्रहणं तदा तद्-दक्षिणायै वा अङ्गीभूताभिषेकादि-दक्षिणा सिद्धेति ।

वामकेश्वर-तन्त्रे त्रि-पञ्चाशत्-पटले—अभिषिक्तः साधकेन्द्रः क्रियादक्षो भवेत् प्रिये ! शरीर-शोधनं देवि ! न प्रलिप्येत् क्रियां विना ।

शारदायाम्—दद्याद् विद्यान्तरं तस्मै विनीतायाम्बु-पूर्वकम् । गुरोर्लब्ध्वा पुनर्विद्यानष्ट-कृत्वो जपेत् सुधीः । गुरु-विद्या-देवतानामैक्यं सम्भावयन् धिया । प्रणमेद् दण्ड-वद् भूमौ गुरुं तं देवतात्मकम् । तस्य पादाम्बुज-द्वन्द्वं निजमूर्द्धनि योजयेत् । शरीरमर्थं प्राणं च सर्वं तस्मै निवेदयेत् । ततः प्रभृति कुर्वीत गुरोः प्रियमनन्य-धीः । ऋत्विग्भ्यो दक्षिणां दद्यात् समग्रां प्रीत-मानसः । ब्राह्मणांस्तर्पयेत् पश्चात् भक्ष्य-भोज्य-सदक्षिणान् । एषा क्रियावती दीक्षा प्रोक्ता सर्व-समृद्धिदा ।

बृहन्नील-तन्त्रे तृतीय-पटले—तस्य छायानुसारी स्यान्निकटे त्रि-दिनं वसेत् । नोचेत् सञ्चारिणी शक्तिर्गुरुमेति न संशयः । इति क्रियावती दीक्षा ।

## आणवी-दीक्षा-विधिः—अस्या भेद-कथनम्

आणवी दीक्षा तु दश-विधा । तद्-यथा—आणवी बहुधा दीक्षा नादेयी शाम्भवी पुनः । एकधैवेति विद्वद्भिः पठ्यते शास्त्र-कोविदैः ।

राघव-भट्ट-धृतं वचनं—आणवी बहुधेत्युक्ता तद्-भेदमधुनोच्यते । स्मार्त्ती मानसिकी यौगी चाक्षुषी स्पार्शिकी तथा । वाचिकी मान्त्रिकी हौत्री शास्त्री चेत्यभिषेचिका । विदेशस्थं गुरुं स्मृत्वा शिष्यं पाप-त्रयं क्रमात् । विश्लेष्य लय-सागाङ्ग-विधानेन परे शिवे । सम्यग्-योजन-रूपेर्वा स्वञ्चान्तौ

दीक्षेति कथ्यते ॥१॥ स्व-सन्निधौ समासीनमालोक्य मनसा शुचिः । मल-त्रयादुपायैर्या विज्ञेया सा तु मानसी ॥२॥ योगोक्त-क्रमतो योगी शिष्य-देहं प्रविश्य तु । गृहीत्वा तस्य चात्मानं स्व-देह-योजनात्मिका । योगा-दीक्षेति सा प्रोक्ता मल-त्रय-विनाशिनी ॥३॥ शिवोऽहमिति निश्चित्य वीक्षणं करुणार्द्रया । दृशा सा चाक्षुषी दीक्षा सर्व-पाप-प्रणाशिनी ॥४॥ स्वयं पर-शिवो भूत्वा निःसन्दिग्ध-मना गुरुः । शिव-हस्तेन शिष्यस्य स्व-मन्त्रं मूर्ध्नि संस्पृशेत् । स्पर्श-दीक्षेति सा प्रोक्ता शिवाभिव्यक्ति-कारिणी ॥५॥ शिव-हस्त-लक्षणम् यथा सोम-शम्भौ—गन्धैर्मण्डलकम् स्वीयै-विदध्याद् दक्षिणे करे । विधिना त्वर्चयेद् देवमित्थं स्याच्छिव-हस्तकमिति । स्वीयैगन्धैः स्व-स्व-गन्धाष्टकैरित्यर्थः ॥ गुरु-वक्त्रं निजं वक्त्रं विभाव्य-गुरुरा-दरात् । गुरु-वक्त्र-प्रयोगेण दिव्य-मन्त्रादिकम् शिशोः । मन्त्र-न्यासादिभिः सार्द्धं दद्यात् सेयं च वाचकी ॥६॥ दीप-वातो यथा मन्त्र-न्यास-संयुक्त-विग्रहः । स्वयं मन्त्र-तनुर्भूत्वा संक्रमं मन्त्रमादरात् । दद्यात् शिष्याय सा दीक्षा मान्त्री मल-विघातिनी ॥७॥ कुण्डे वा स्थण्डिले वापि निक्षिप्याग्निं विधानतः । लय-भाग-क्रमेणैव प्रत्यध्वानं यथा-क्रमम् । मन्त्र-वर्ण-कला तत्र पदविष्टपमेव च । संशोध्य होम-रूपैर्या हौत्री दीक्षा समीरिता ॥८॥ योग्य-शिष्याय भक्ताय शुश्रूषार्चा-पराय च । सार्द्धं शास्त्र-पदा दद्या शास्त्री दीक्षेति सोच्यते ॥९॥ शिवं च शिव-पत्नीं च कुम्भे सम्पूज्य सादरम् । शिव-कुम्भाभिषेकात्मा दीक्षा स्याद् अभिषेचिका ॥१०॥

तत्र वर्ण-मयी दीक्षा

शारदायाम्—अथ वर्णात्मिकां वक्ष्ये दीक्षामागम-वेदिताम् । पुं-प्रकृत्यात्मका वर्णाः शरीरमपि तादृशम् । यतस्तस्मात् तनौ न्यस्येद् वर्णान् शिष्यस्य देशिकः । तत्तत्-स्थान-युतान् वर्णान् प्रतिलोमेन संहरेत् । स्वाज्ञया देवता-भावाद् विधिना देशिकोत्तमः । तदा विलीन-तत्त्वोऽयं शिष्यो दिव्य-तनुर्भवेत् । परमात्मनि संयोज्य तच्चैतन्यम् गुरूत्तमः तस्मादुत्पादितान् वर्णान् न्यस्येच्छिष्य-तनौ पुनः । सृष्टि-क्रमेण विधि-वच्चैतन्यम् च नियो-जयेत् । जायते देवता-भावः परानन्द-मयः शिशोः । एषा वर्ण-मयी दीक्षा प्रोक्ता ज्ञान-प्रदायिनी ।

### कलावती दीक्षा

कलावती दीक्षा तु अस्मद्-गोष्ठी-गरिष्ठ-कृष्णानन्दागम-वागीशेन स्व-कृत-तन्त्रसारे ग्रन्थे लिखिता। संक्षेप-दीक्षापीत्यतो नैतयोरत्र प्रयोजनम्।

### वेधमयी दीक्षा

वेधमयी दीक्षाप्यप्रचरद्-रूपतया न लिखिता। अन्वेषकैः शारदायां पञ्चम-पटले अन्वेष्यति।

### क्रम-दीक्षा-विधिः

अथ क्रम-दीक्षा—कामाख्या-तन्त्रे द्वा-त्रिंशत्-पटले—देव्युवाच—क्रम-दीक्षां ब्रूहि नाथ ! यदि तेऽस्ति कृपा मयि। कथम् वा कुरुते दीक्षां क्रमेण जगदीश्वर ! शिव-उवाच—श्रुता दीक्षा बहु-विधा देवानां प्रीति-दायिका। इदानीं कथयिष्यामि यदि कस्मै न वक्ष्यसि। प्रकाशाद् बहवो दोषाः सर्वत्र गोपिता मया। कलौ पाप-समाचारे सिद्धिर्न स्यात् कदाचन। सिद्धिर्न स्यात् सिद्धिर्न स्यात् कलौ नान्य-विधानतः। क्रम-दीक्षा-विहीनस्य कलौ न स्यात् कथञ्चन। इति ज्ञात्वा महेशानि ! क्रम-दीक्षां समाचरेत्। रसैर्मन्त्रैर्यथा विद्धमयः सौवर्णतां व्रजेत्। क्रम-दीक्षा-प्रभावेण तथात्मा शिवतां लभेत्। जपो देवार्चन-विधिः कार्यो दीक्षा-क्रमेण वै। उपचार-सहस्रैस्तु योजिता भक्ति-संयुताम्। क्रम-दीक्षां विना देवि ! न गृह्णन्ति कदाचन। आदौ काली ततस्तारा सुन्दरी तदनन्तरम्। क्रम-दीक्षेति विख्याता सर्वदा सिद्धि-कामतः। राज्यं देयं शिरो देयं न देयं क्रम-योगतः। विधानं क्रमतः सिद्धिरभिषेकाच्च पार्वति ! विशुद्ध-माता-पितृको जितेन्द्रियः सर्वागमज्ञः पर-दुःख-कातरः। एवम् विधानो गुरुरेव शान्तः कुलीन-शिष्यः क्रमतो विधानम्। नात्र शुद्धा-द्यपेक्षास्ति न वा सिद्धादि-चिन्तनम्। न चाधिकारि-चिन्ता च ग्रहणे क्रम-योगतः। एकाहे वा वत्सरे वा वत्सरान्तेऽपि पार्वति ! तस्मात् शिष्यः प्रयत्नेन गृह्णीयात् क्रम-योगतः। गृहीत्वा गुरु-वक्त्राच्च क्रमेण पूजयेच्च ताः। क्रमेण च यजेद् देवि ! पुरश्चर्या-क्रमेण च। प्रथमे दिवसे शिष्यः संयतात्मा जितेन्द्रियः। द्वितीये चोपवासश्च त्रि-दिने दीक्षयेद् गुरुः। कुलीनत्वस्य स्वीकारं कारयित्वा मनून् वदेत्। एकाक्षरं त्र्यक्षरं वा द्वा-विंशत्यक्षरं तथा। द्वितीया-यास्तथा प्रोक्तं तृतीयायास्त्रि-कूटतः। क्रमेण दिवसे वापि क्रमेण वत्सरेण

च। वत्सरान्ते तथा देवि ! क्रमेण दीक्षयेद् गुरुः। ग्रामान् दासांश्च दासीश्च सुवर्णं च यथा-क्रमम्। गुरवे दक्षिणां दद्याद् विभवस्यानुसारतः। यदि भाग्य-वशाद् देवि ! क्रम-दीक्षा च जायते। तदा सिद्धिर्भवेत् तस्य नात्र कार्या विचारणा। क्रम-दीक्षा-विहीनस्य कथं सिद्धिः कलौ भवेत्। सर्वाश्रमेषु भूतेषु सर्व-देवेषु सुव्रते ! क्रमम् विना महेशानि ! सर्वं तेषां वृथा भवेत्। तस्मात् सर्व-प्रयत्नेन गुरुणा दीक्षितो भवेत्। क्रम-मूलं जगत् सर्वं क्रम-मूलम् परम् तपः। अदीक्षिता यदि ज्ञाता किञ्चिदादाय भोजयेत्। वृथा दानं भवेत् तस्य तस्मात् सर्वं विवर्जयेत्। सद्-गुरोराहिता दीक्षा सर्व-कर्माणि कारयेत्। इति क्रम-दीक्षा।

### कलौ तान्त्रिक-संस्कार-पत्र-रत्न-दीक्षादिकम्

शाक्तानन्द-तरङ्गिणी-धृत-गुप्त-दीक्षा-तन्त्रे—मृतमप्यनुगच्छेत विद्या-मन्त्रो विशेषतः। मन एव मनुष्यस्य पूर्व-कर्माणि शंसति। यदि न स्यान्महे-शानि ! मनुष्यस्य कथं भवेत्। दीक्षायां च कथं तस्य मनो भवति पार्वति ! तस्मात् तु यत्नतो देवि ! पूर्व-विद्यां समुद्धरेत्।

### देवता-भेदे मन्त्र-लिखन-प्रकारादिकम्

वकुलाश्वत्थ-वटकं पत्र-रत्नं शृणु प्रिये ! वट-पत्रे महेशानि ! शक्ति-मन्त्रं लिखेत् प्रिये ! अश्वत्थे विष्णु-मन्त्रं च वकुले शिव-मन्त्रकम्।

### देवता-विशेषे मन्त्र-लिखन-द्रव्य-कथनं

रक्त-चन्दनेन देवेशि ! काश्मीरेण महेश्वरि ! शक्ति-मन्त्रं लिखेद् देवि ! चन्दने विष्णु-मन्त्रकम्। भस्मना शिव-मन्त्रं च विलिखेत् परमेश्वरि! सप्त-सप्तक-पत्रेषु तत्तद्-देवताया मन्त्रं लिखेदित्यर्थः।

### तत्तद्-देवता-प्राण-प्रतिष्ठादि-कथनं च

प्राण-प्रतिष्ठां तन्मन्त्रे कारयेद् यत्नतः सुधीः। तत्तद्-देवतायाः प्राण-प्रतिष्ठां कारयेत्। यथा-शक्त्युपचारेण सम्पूज्य परमेश्वरि !

### तत्र सूर्यार्घ्य-दानं अर्घ्य-द्रव्य-कथनं च

ततः शिष्योऽर्घ्य-पात्रं च हस्ते कृत्वा महेश्वरि ! अनेन मनुना मन्त्री भास्कराय निवेदयेत्। अर्घ्य-द्रव्यमाह—आपः क्षीरं कुशाग्राणि घृतं दधि

तथा मधु । रत्नानि करवीराणि तथैव रक्त-चन्दनम् । अष्टाङ्ग एषोऽर्घ्यो वै भानवे परिकीर्तितः । ॐ भो देव ! पृथिवी-पाल ! सर्व-शक्ति-समन्वित ! ममार्घ्यं च गृहाण त्वम् पूर्व-विद्यां प्रकाशय । अर्घ्यं दत्वा नमस्कृत्य कृतांजलिः पठेत् ततः ।

गान्धर्वे—न दद्याद् भास्करायार्घ्यं शङ्ख-तोयैर्महेश्वरि ! ॐ सूर्यः सोमो यमः कालो महा-भूतानि पञ्च वै । एते शुभाशुभस्येह कर्मणो नव साक्षिणः । सर्व-देवाः शरीरस्थाः मम मन्त्रस्य साक्षिणः । पूर्व-जन्मार्जितां विद्यां मम हस्ते प्रदापय । पठित्वेदम् महेशानि ! सत्वरम् पत्रमुद्धरेत् । उद्धृत्य पत्रमेकं तु गुरोर्हस्ते प्रदापयेत् । गुरुस्तु अक्षर-श्रेणीमुद्धृत्य परमेश्वरि ! सेतुं दत्वा महेशानि ! तत्राष्ट-शतकम् जपेत् । शिष्यस्य मस्तके हस्तं दत्वा चाष्ट-शतं जपेत् । गुरुस्तु प्राङ्-मुखो भूत्वा शिष्यः प्रत्यङ्-मुखः स्थितः । अन्यत्र—प्राङ्-मुखो गुरुरासीनः शिष्य प्रत्यङ्-मुखः स्थितः । त्रि-वारं दक्षिणे कर्णे वाम-कर्णे तथा सकृत् । स्त्री-शूद्र-विषये कुर्याद् वैपरीत्येन चिन्तनम् । आचम्य संयतो भूत्वा प्राणायामं विधाय च । अष्टोत्तर-शतं जप्त्वा ऋष्यादिक-समन्वितम् । अष्ट-कृत्वो जपेन्मन्त्रं वाम-कर्णे सुरेश्वरि ! इयं दीक्षा सर्व-तन्त्रे शक्तेर्या परिकीर्तिता । गुरोर्लब्धां महा-विद्यामष्टोत्तर-शतं जपेत् । गुरवे दक्षिणां दद्याद् वित्त-शाठ्यं न कारयेत् । गुरवे गुरु-पुत्राय तत्-पत्न्यै वा प्रदापयेत् ।

कुलार्णवे—गुरु-प्रीति-समुत्पन्ने देवता-प्रीतिमाप्नुयात् । देवता-प्रीति-मापन्ने मन्त्र-सिद्धिर्भवेद् ध्रुवम् । पत्र-रत्नं प्रधानेन दीक्षां कुर्यात् कलौ युगे । ततः सिद्धो भवेन्मन्त्री नात्र कार्या विचारणा । एतज् ज्ञानं विना देवि ! दीक्षां कुर्याच्च यो नरः । दीक्षा तु विफला तस्य अन्ते तु नरकं व्रजेत् । ततः शिष्यो महेशानि ! प्रणमेद् दण्डवद् भुवि । ततो गुरुर्वदेत्—उत्तिष्ठ वत्स ! मुक्तोऽसि सम्यगाचारवान् भव । कीर्तिः श्रीकान्ति-मेधायुर्बलारोग्यं सदाऽस्तु ते ।

योगिनी-हृदये—मन्त्रं दत्वा गुरुश्चैव उपवासं समाचरेत् । महान्ध-कार-नरके कृमिर्भवति नान्यथा ।

रुद्र-यामले—श्यामाभया भैरवी ताराछिन्नमस्तासु भैरवे । मञ्जुघोषे तथा रौद्रे पञ्चाङ्गं न्यस्यते बुधैः । तत्रापि गुह्यकाली-विषये पञ्चायतन-

दीक्षा तत् पुरैवोक्तम् । कलौ तान्त्रिक-संस्कार-पत्र-रत्न-दीक्षादिकं चोक्तम् ।

## प्रबल-कलि-लक्षणम्

प्राप्तावसरेणेदानीं प्रबल-कलि-लक्षणमुच्यते । यथा महा-निर्वाण-तन्त्रे चतुर्थोल्लासे—यदा तु वैदिकी दीक्षा दीक्षा पौराणिकी तथा । न स्थास्यति वरारोहे ! तदैव प्रबलः कलिः । यदा तु पुण्य-पापानां परीक्षा वेद-सम्भवा । न स्थास्यति शिवे ! शान्ते! तदैव प्रबलः कलिः । क्वचिच्छिन्ना क्वचिद्-भिन्ना यदा सुर-तरङ्गिणी । भविष्यति कुलेशानि ! तदैव प्रबलः कलिः । यदा स्त्रियोऽति-दुर्दान्ताः कर्कशाः कलहे रताः । यदा तु म्लेच्छ-जातीया राजानो धन-लोलुपाः । भविष्यन्ति महा-प्राज्ञे ! तदैव प्रबलः कलिः । यदा तु मानवा भूमौ स्त्री-जिताः काम-किङ्कराः । द्रुह्यन्ति गुरु-मित्रादीन् तदैव प्रबलः कलिः । यदा क्षौणी स्वल्प-फला न मेघास्तोय-वर्षिणः । असम्यक्-फलिनो वृक्षा-स्तदैव प्रबलः कलिः । भ्रातरः स्वजनामात्या यदा धन-फलेच्छया । मिथः सम्प्रहरिष्यन्ति तदैव प्रबलः कलिः । प्रकटे मद्य-मांसादौ निन्दारम्भ-विवर्जिते । गूढ़-पानं प्रकुर्वन्ति तदैव प्रबलः कलिः । सत्य-त्रेता-द्वापरे च यथा मद्यादि-सेवनम् । कलावपि तथा कुर्यात् कुल-वर्त्मानुसारतः । इति प्रबल-कलि-लक्षणम् ।

## कलेरुपशम-प्रकारः

कलेरुपशम-प्रकारोऽपि तत्रैव—ये कुर्वन्ति कुलाचारं सत्य-पूता जितेन्द्रियाः । व्यक्ताचार-दया-शीला न हि तान् बाधते कलिः । गुरु-शुश्रूषणे युक्ता भक्ता मातृ-पदाम्बुजे । अनुरक्ताः स्व-दारेषु न हि तान् बाधते कलिः । सत्य-व्रताः सत्य-निष्ठाः सत्य-धर्म-परायणाः । कुल-साधन-सत्या ये न हि तान् बाधते कलिः । कुल-मार्गेण तत्त्वानि शोधितानि च योगिने । ये दद्युः सत्य-वचसे न हि तान् बाधते कलिः । हिंसा-मात्सर्य-रहिता दम्भ-द्वेष-विवर्जिताः । कुल-धर्मेषु निष्ठा ये न हि तान् बाधते कलिः । लौकिकैः सह संसर्गं वसितं कुल-साधुषु । कुर्वन्ति कौल-सेवां ये न हि तान् बाधते कलिः । नाना-वेश-धराः कौलाः कुलाचारेषु निश्चलाः । सेवन्ते त्वां कुलाचारैर्न हि तान् बाधते कलिः । बीज-सेकादि-संस्कारान् पितृ-श्राद्धादिकाः क्रियाः । ये कुर्वन्ति कुलाचारैर्न हि तान् बाधते कलिः । कुल-तत्त्वं कुल-द्रव्यं कुल-योगिन : च

नमस्कुर्वन्ति ये भक्त्या न हि तान् बाधते कलिः। कौटिल्यानृत-हीनानां स्वच्छानां कुल-मार्गिणां। परोपकार-व्रतिनां साधूनां किङ्करः कलिः।

## कलेर्गुण-कथनादिकम्

अथ कलेर्गुणः—कलेर्दोष-समूहस्य महानेको गुणः प्रिये! सत्य-प्रतिज्ञा कौलानां श्रेयः सङ्कल्प-मात्रतः। अपरे तु युगे देवि! पुण्य-पापं च मानसम्। नृणामासीत् कलौ पुण्यं मानसं न तु दुष्कृतम्। कुलाचार-विहीना ये सततं सत्य-भाषिणः। पर-द्रोह-परा ये च ते नराः कलि-किङ्कराः। कुल-धर्मेऽत्र-भक्ता ये पर-योषित्सु कामुकाः। द्वेष्टारः कुल-निष्ठानां ते ज्ञेया कलि-किङ्कराः। प्रकटेऽत्र कलौ देवि! सर्वे धर्माश्च दुर्बलाः। स्थास्यत्येकं सत्य-मात्रं तस्मात् सत्य-मयो भवेत्। सत्य-धर्मं समाश्रित्य यत् कर्म कुरुते नरः। तदेव सफलं कर्म सत्यं जानीहि सुव्रते! न हि सत्यात् परो धर्मो न पाप-मनृतात् परम्। तस्मात् सर्वात्मना मर्त्यः सत्यमेकं समाश्रयेत्। सत्य-हीना वृथा पूजा सत्य-हीनो वृथा जपः। सत्य-मूलाः क्रियाः सर्वाः सत्यात् पर-तरं न हि। अतएव मया प्रोक्तं दुष्कृते प्रबले कलौ। कुलाचारोऽपि सत्येन कर्तव्यो व्यक्त-भावतः। गोपनाद्धीयते सत्यं न गुप्तिरनृतं विना। तस्मात् प्रकाशतः कुर्यात् कौलिकः कुल-साधनम्। कुल-धर्मस्य गुप्त्यर्थं नानृत्यं स्याज्जुगुप्सि-तम्। यदुक्तं कुल-तन्त्रेषु न शस्तं प्रबले कलौ। कृते धर्मश्चतुष्पादस्त्रेतायां पाद-हीनकः। द्वि-पादो द्वापरे देवि! पाद-मात्रं कलौ युगे। तत्रापि सत्यं बल-वत् तपः खण्डं दयापि च। सत्य-पादे कृते लोपे धर्म-लोपः प्रजायते। तस्मात् सत्यं समाश्रित्य सर्व-कर्माणि साधयेत्।

कुलाचारं विना यत्र नास्त्युपायः कुलेश्वरि! तत्रानृत-प्रवेशः स्यात् कुतो निःश्रेयसं भवेत्। सर्वथा सत्य-पूतात्मा मन्मुखेरित-वर्त्मना। सर्वं कर्म नरः कुर्यात् स्व-स्व-वर्णाश्रमोदितम्। दीक्षां पूजां जपं होमं पुरश्चरण-तर्पणम्। व्रतोद्वाहौ पुंसवनं सीमन्तोन्नयनं तथा। जात-कर्म तथा नाम चूड़ा-करणमेव च। यात्रां गृह-प्रवेशं च नव-वस्त्रादि-धारणम्। वापी-कूप-तड़ा-गानां संस्कारं तिथि-कर्म च। गृहारम्भं प्रतिष्ठां च देवता-स्थापनं तथा। मयोक्तेन विधानेन तत्-सर्वं साधयेन्नरः। यदि मन्मतमुत्सृज्य महेशि! प्रबले कलौ। तदा यत् क्रियते कर्म विपरीताय तद् भवेत्।

[प्राण-तोषिणी तन्त्रम् : २४७

अष्टमोल्लासे—अतोऽत्र कथितं देवि! द्विजानां प्रबले कलौ। गांयत्र्यामधिकारोऽस्ति नान्य-मन्त्रेषु कर्हिचित्। द्विजातीनां प्रभेदार्थं शूरेभ्यः परमेश्वरि! सन्ध्येयं वैदिकी प्रोक्ता प्रागेवाह्निक-कर्मणः।

❀ ❀ ❀

विश्वासो रामहर्याह्वय इह सुकृती पुण्य-कीर्तिर्वरिष्ठः साक्षाद् धर्मो महात्मा स्म जनयति नरः श्रील-नारायणाभौ। शान्तौ दान्तौ सदन्तः कृति-मिलित-जगन्मोहन-प्राणकृष्णौ श्रीवाणीशौ प्रतापानल-ज्वलित-महाराति-वंशाटवीकौ। श्रीप्राणकृष्ण-विश्वासः सुतान् सप्त महोदयान्। अजीजनद् देव-विप्र-भक्तान् नाना-गुणान्वितान्। श्रीलानन्द-मय ज्येष्ठः सदानन्द-मयः कृती। श्रीरामचन्द्रस्तदनु दया-धर्म-प्रतापवान्। श्रीविश्वनाथो विश्वात्मा तदनु ज्ञान-दान-वान्। श्रीशम्भुनाथस्तदनु स्निग्ध-मूर्तिर्दया-मयः। श्रीकाशीनाथ-विश्वासो विश्वास-कुल-पावनः। श्रीचन्द्रनाथस्तदनु चन्द्र-दृक्षो गुणाकरः। एतेऽप्युद्-योगिनो ग्रन्थ-कारणार्थे यतः सदा। अतो नामान्यत्र तेषां निबध्नाम्यति-यत्नतः। धीमान् श्रीमान् भुवन-विदितस्तन्त्रसारस्य कर्ता कृष्णानन्दोऽजनि भुवि नव-द्वीप-देश-प्रदीपः। काशीनाथोऽभवदिह सुतस्तस्य सारावली-कृत् विद्वान् मान्योऽजनि तदनुजो विश्वनाथाह्वयोऽतः। गोपालो निर्णय-कृति-यशस्वी मधोः सूदनाच्चाभूतां पुत्रौ मधु-सुत इतः कालिदासः प्रसिद्धः। तत्-पुत्रोऽभूद् रघुवर-परो नाथ एकान्त-बुद्धिस्तत्-सूनुश्चाभवदिह सुधी-मङ्गलः कृष्ण-पूर्वः। श्रीकृष्ण-मङ्गल-सुतो नव-वल्लिकायाः श्रीराम-तोषण इदं कृतवान् द्वितीयम्। काण्डं तु संस्कृति-युतं फल-पुष्प-शोभं धर्माभिधं कृति-मतां सकलेष्ट-सिद्धयै।

॥ इति श्रीप्राणकृष्ण-विश्वासानुमतायां श्रीरामतोषण-विद्यालङ्कार-भट्टाचार्य-विरचितायां श्रीप्राणतोषिण्यां नाना-दीक्षा-रूप-फल - कथनात्मक-षष्ठ-परिच्छेदान्वित-धर्म-काण्डं समाप्तम् ॥



# उद्धृत ग्रन्थ एवं तन्त्रज्ञ-नामावली


१ अध्यात्म - विवेक—२१, ४७, ५०, ५८

२ अन्नदा कल्प—१७६

३ अभिनव गुप्त पादाचार्य—६८

४ अमरसिंह—२०, ३६, १०६

५ ईशान - संहिता—३८, १०८

६ ऋग्वेद—२१४

७ कंकाल - मालिनी तन्त्र—१५६

८ कल्प - चिन्तामणि—१६४

९ कल्प - सूत्र—२१, ३०, १०१, १५६, १६०, १६५, १६८, १९६, १९७

१० कामधेनु तन्त्र—२६, ३०, ८०-८८, २२२

११ कामाख्या तन्त्र—१५४, १६१, १६२, १६४, २४३

१२ काली - कुल - सर्वस्व—१०३

१३ काव्य - प्रकाश—१९

१४ कुब्जिका तन्त्र—११, १३, १५, २०, ११५, १२०, १२३

१५ कुलार्णव तन्त्र—१६, २२, २३, ६२, ६७, १०१, १०५, १५४-५५,
१६२, १६५, १६७-६९, १७२-७४, १९६-९७, २४५

१६ क्रिया-सार—१८६

१७ कृष्णानन्द 'आगम-वागीश', भट्टाचार्य (अति-वृद्ध प्रपितामह)—१२३,
१७५ १९७, २४३

१८ गन्धर्व तन्त्र—११, १०२, १३४, २३४, २४५

१९ गायत्री तन्त्र—१००, १३९, २१७

२० गुप्त - दीक्षा तन्त्र—२४४

२१ गुप्त - साधन तन्त्र—१९, १६०, १७०-७१

२२ गुरु-गीता—१९, १६० १६७, १७०, १७३

२३ गुरु तन्त्र—१५८-६१, १६८, १७०-७१

२४ गोपीनाथ तर्काचार्य—१८, १६
२५ गोरक्ष - संहिता—१४
२६ गौतम—१०२, ३
२७ ग्रह - यामल—२१४-१५, २१७
२८ ज्योतिस्तत्व—८०, १८६
२६ ज्ञान - भाष्य—४५, ४६, ५०, ६५
३० तत्व - न्यास—११०
३१ तत्व - विवेक—२६
३२ तत्व - सार—६५, ६६
३३ तन्त्रसार—१२३, १६२, १७५, १६७, २११, २४३
३४ तन्त्रान्तर—५४, ११२
३५ तापनी—१०६
३६ तिथि - तत्व—३६
३७ त्रिकाण्ड - मण्डल—१८७
३८ दत्तात्रेय—१०३
३६ दुर्गासिंह—१६
४० देवी - पुराण—१८६
४१ नरपति - जय - चर्या—५५, ५६, १७५
४२ नव - चक्रेश्वर—१५६-५७
४३ नारद - पञ्चरात्र—३०, १०७
४४ नारायणीय—१०८, १६८
४५ निरुत्तर तन्त्र—५३, १०६, १६३, २३६, २४१
४६ निर्वाण तन्त्र—१०, १२, १५, ३७, ४३, ४४, ४७, ६६, १०५
४७ पञ्च - कोष - विवेक—६०
४८ पदार्थादर्श—७२, ७३
४६ पराक्रम—२६
५० परा - पञ्चाशिका—१०४

५१ परा - परिम[illegible]ल्लास—२१, १०१

५२ पिङ्गला - [illegible]त—११०-१३

५३ पिच्छला तन्त्र—१५७, १६०, १७३, २१३, २३०

५४ पुरश्चरण - रसोल्लास तन्त्र—११, १९७

५५ पुष्प - दन्त—२९

५६ प्रपञ्चसार—२२-२४, २७, ३१, ३५, ३७, ३८, ४०, ४२, ४६, ४८, ४९, ५१, ५३, ५९-६२, ६६, ६८, ६९, ७७, १८९, १९०, २३१

५७ प्रयोग-सार—१३, १४, १६, ६०, ७५, १०७, १७७, १९२-९४, २००

५८ फेत्कारिणी तन्त्र—२२, २४

५९ बृहन्नील तन्त्र—१०, ३०, १३५, १५४-५५, १६२, १६९, २४१

६० बौधायन—१८८

६१ ब्रह्म - ज्ञान तन्त्र—३७, ५२

६२ ब्रह्म - यामल—५५, ५९, १७५, १७८, २१५

६३ भगवद् - गीता—१६, १९, ६८, १०२

६४ भगवान् दत्तात्रेय—१९९

६५ भर्तृहरि—७६

६६ भूत - डामर—१२५

६७ भैरव तन्त्र—१०४

६८ मत्स्य - सूक्त—१०, ४०, १४१, १५३, १६४

६९ मनु—१०४

७० मन्त्र - मुक्तावली—११०, ११२, ११४

७१ महा - कपिल - पञ्चरात्र—१७६, १८४, १८७-८८, १९१-९५, १९८

७२ महाभारत—७६, १०३

७३ महा - निर्वाण तन्त्र—११, १३१, १३६, १४०, १४२-४३, १५४-५५, २४६

७४ महिष - मर्दिनी तन्त्र—१६२

७५ मातृका - भेद तन्त्र—४५, ४६, १३८, १५८
७६ मातृकोदय—२६
७७ मार्कण्डेय पुराण—१३
७८ मुण्ड - माला तन्त्र—१०, १२, १५७-५८, १६६
७९ मृत्युञ्जय- संहिता—२१
८० मेरु - तन्त्र—३१, १०६, २०१, २०४-५, २०८, २३२, २४१
८१ मैत्रेय—३१
८२ यजुर्वेद—२१४
८३ यामल—२६, ६०, १५८, १६३, १६६-६८
८४ योगार्णव—४७-५०, ५४, ५८
८५ योगिनी तन्त्र—१४, १८, ८८-९०, १६१, १७१-७२, १९६, २०३
८६ योगिनी - हृदय—२४५
८७ योगि-याज्ञवल्क्य—४७-५०, ५६, ५८, ५९
८८ राघव - भट्ट—१३, २२, २६, ३५, ३७ - ३९, ४६ - ४९, ५२, ७२, ७३, ११२-१५, १६४, १७०, १७६, १८६-८८, १९३, १९८, २४१
८९ रामकृष्ण पण्डित—६१
९० रामलोचन विद्याभूषण (लेखक के अग्रज)—१७७
९१ राय मुकुट—२०, ५९
९२ रुद्र-यामल—२८, ४३, ५७, ७६, १५३-५५, १५७, १५९, १६२-६३, १६५-६९, १७२, १७५, १९६, १९९, २००, २१५, २३०, २४५
९३ लक्ष्मणाचार्य जगद्गुरु—१४
९४ लघु - कल्प - सूत्र—१९६
९५ वरदा तन्त्र—७८
९६ वर्ण-विलास तन्त्र—२२२
९७ वर्णाभिधान—२९
९८ वर्णोद्धार तन्त्र—८०-८८, २२२
९९ वाग्भट—४६

१०० वामकेश्वर तन्त्र—३७, १५६, २३६, २४१

१०१ वायवीय संहिता—५२, १६६

१०२ वास्तु - याग - प्रदीपिका—१७७

१०३ विद्यानन्द स्वामी—६०

१०४ विश्वसार—२२, २७, ३१, ३५, ३८, ४०, ४२, ५१, ५५, ५६, ६३-६५, १००-१, १५३, १६०, १८७, १८६, १६६, २००, २०३, २०५-६, २१३, २१४

१०५ वीर-मित्रोदय—१६४

१०६ वृहस्पति—८०

१०७ वेदान्त - वृत्ति—२७

१०८ व्यास—१०२

१०६ शङ्कराचार्य—२१, ३०, १०१, १०६

११० शाक्तानन्द - तरङ्गिणी—४५, ४६, ५३, ५५, ६३-६७, १५६, १५६, १६२, १६८, २४४

१११ शारदातिलक—१३, १४, १६, १८, २३, २७, ३१, ३५-३६, ४२, ४६, ४८, ५०-५५, ५८, ६०, ६३, ६८, ७०, ७२, ७३, ७५, ७६, ७८, ७६, १०७-६, ११२-१३, ११५, ११६, १२१-२३, १५३, १६६, १८७-८६, १६२, २००, २०८, २३०, २४०, २४२-४३

११२ शिक्षा - सूत्र—७६, ७७

११३ श्राद्ध - तत्व—१६५

११४ श्री तत्व - चिन्तामणि—५४

११५ श्रीधर स्वामी—३०, ३१, १०२-३

११६ श्री भागवत—१६, १०२-४

११७ श्रुति—२२, २७, ३७, ५१

११८ षट् - कर्म - दीपिका—१६८

११६ षडन्वय - महा - रत्न—१६६

१२० समयाचार तन्त्र—१०५, १२४, १६६

१२१ सम्मोहन तन्त्र—१५६

१२२ सार - संग्रह—१५६
१२३ सारस्वत तन्त्र—१६२, १६४-५
१२४ सिद्धान्त शेखर—१६१-६५
१२५ सुश्रुत—४८
१२६ स्मृति—३६
१२७ स्वच्छन्द - भैरव—१०४
१२८ स्वर - शास्त्र—२०
१२६ स्वरोदय—५५, ५६, १७५, १७८ - ७६
१३० हयशीर्ष - पञ्चरात्र—१७७, १८७, १६३





